अस्मिन् योगे गृजाच्छाया भवति । तत्र श्राद्धं पुण्यैरवाप्यते । आश्विनकृष्ण-त्रयोदशीरे मघारे चन्द्र थित्र हस्तानक्षत्रे रवि थिव दृहाकु गजच्छाया योग वत्ति । रयि श्राद्ध कन्ने पुण्य थोर ।

\+ \+ \+ \+ \+

येमम्मे लेखि थिक्ता सेरूपे व्याख्यान कनु ।

**Colophon.** इति श्रीकृष्णरथविरचिते संस्कृतदेशभाषायां यवचक्रविवरणे अगस्त्यो-दयादिनिरूपणाख्यो द्वादशोऽध्यायः । समाप्तः ।

विषयः । इति श्रीकृष्णरथकृते संस्कृतदेशीयभाषायां यवचक्रविवरणे मध्याधिकारः समाप्तः प्रथमोध्यायः । इति श्री...... स्फुटाधिकारो नाम द्वितीयोऽध्यायः समाप्तः । इति श्री...... तिथ्याधिकारो नाम । ३ । ( चतुर्थो नास्ति ) इति श्री...... नक्षत्रचक्राद्य-धिकारो नाम । ५ । इति श्री...... वक्रनिरूपणं नाम । ६ । इति श्री ...... मङ्गलादि-ग्रहाणां चक्रकेन्द्रादिनिरूपणं नाम ।७। इति श्री...... चक्रचक्राद्यर्धादिनिरूपणं नाम । ८ । इति श्री...... षष्टी संवत्सर निरूपणाख्या । ९ । इति श्री...... अयनांशचरदिनार्धादि-निरूपणाख्या । १० । इति श्री...... लग्नसाधनाख्या । ११ । इति श्री...... अगस्त्योद-यादिनिरूपणाख्या । १२ ।

---

**No. 81.** ग्रहादर्शपत्रम् । By निधिमिश्रदैवज्ञ । Substance, country-made paper, 9×4 inches. Folia, 7. Lines, 12 on a page. Extent 338 ślokas. Character, Nāgara. Date, Saṃvat 1871. Place of deposit, District Chāprā, P. O. Gopālganj, Harapura, Jagadeo Paṇḍit. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

गणेशं गिरं गोपिकावल्लभं च ।
गुरोः पादपद्मं प्रणम्य भास्करादीन् ॥
प्रणम्याथ कुर्वे ग्रहादर्शपत्रं ।
मतं भास्करीयं निधिः संनिरीक्ष्य ॥
वह्निग्निमोघो न शको गताब्दको-
र्नृपैर्जिनैर्वेदकरैर्विभाजितः ॥ इत्यादि

**End.** • गतगम्यदिनैः × × × × ।
शुक्लपक्षोभवेद्बुधः ॥

अवधपुरनिवासी श्रीनिधिर्विप्रवर्य्यः ।
सकलग्रहगतिज्ञः सर्व्वसिद्धान्तरीत्या ॥
विबुधजनहितार्थं श्रीग्रहादर्शपत्रं
विधुनगवसुचन्द्रे वैक्रमेऽब्दे अकार्षीत् ॥

**Colophon.** इति श्रीनिधिमिश्रदैवज्ञविरचिते ग्रहादर्शपत्रे मध्यस्पष्टाधिकारः समाप्तः ॥ संवत १८७१ ॥

विषयः । ग्रहाणां मध्यमाद्यधिकारकथनम् । दिनगणना-नित्यग्रहानयनादि कथनम् ॥

---

**No. 82.** चतुरनुयोगव्याख्या । Substance, country-made paper, 11 x 4 inches. Folia, 6. Lines, 20 on a page. Extent, 150 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Diṅmaṇḍalā cārya Mahārāja Bālacandra Sūri. Appearance, old. Prose. Correct.

**Beginning.** इह प्रवचने चत्वारोनुयोगाः, तद्यथा चरणकरणानुयोगः, धर्मकथानुयोगः, गणितानुयोगः, द्रव्यानुयोगश्च ।

**End.** अस्माभिः प्रति पा ( ... ) प्राग्व्याख्यातोऽनुयोग एकैकः सकलायां गाथायां, चतुरनुयोगास्तु पृथगधुना, इति ।

**Colophon.** इति चतुरनुयोगव्याख्या सम्पूर्णा ।

विषयः । जैनचतुरनुयोगव्याख्या ।

---

**No. 83.** चन्द्रोन्मीलनदीपकं । Substance, country-made paper, 15 x 3 inches. Folia, 12. Lines, 8 on a page. Extent, 240 slokas. Character, Bengali. Date S.K. 1718. Place of deposit, Zilla Medinipur, post Garveta, gram Khunverā, Babu Vaikuṇṭha Nāth Chakravarti. Appearance, old. Prose and verse. Correct.

**Beginning.** ॐ नमः शिवाय ।

हितनयः क्षितिराक्षिताक्षतिवाक्षिन्या खगेन्द्रवाक्षिन्याः ।
सकलचराचरशिरसि परागपदं नमामि ॥ (?)
दैत्यराज इदं वक्ष्ये जगच्चिन्तासुदीपकं ।

अपि ज्योतिर्विदः कष्टे बुद्धिनिर्म्मलकारकं ।
लाभालाभं सुखं दुःखं जीवितं मरणं तथा ।
जयः पराजयः सन्धिर्गमागमविनिश्चयः ।
मूकचिन्ता च तथा मुष्टि राजावस्थादि कौतुकं । (?)
एतत् सर्व्वं महाशास्त्रे चन्द्रोन्मीलनदीपके ॥
ज्ञानदीपकमादाय वर्त्तिं कृत्वा सदक्षरैः ।
स्वरारोहेण संयोज्य ज्वालयेदुत्तराधरैः ॥
अकचटतपयशा वर्गा उक्तास्तेषु वर्गेषु चि बलं शुभाशुभं सर्व्वं ।
एतैश्च जगत् सर्व्वं व्याप्तमक्षरमण्डाभिः ॥ इत्यादि ॥

**End.** प्रश्नस्य वर्गदर्शनादेव यो दृश्यते स एव प्रश्नाक्षरं निरूप्यते यद्वर्गस्य प्रथमाक्षरं तद्वर्गस्य प्रथमाक्षरं भवति वर्गस्य प्रधानं आलिङ्गिते अधिके

आलिङ्गितं ... ... ... चतुर्थं अभिधूमिते ।
दग्धेन पञ्चमो वर्गो विलोमो धूमिताधरैः ॥

अवर्गा यदाभिधूमिता भवन्ति तदा वैपरीत्याय चतुर्थो वर्गो गृहीतव्यः ।
इति स्वरार्थचतुर्थप्राप्तिः ।

**Colophon.** इति सारोद्धारे चन्द्रोन्मीलनशास्त्रे ज्ञानपटलः समाप्तः । शकाब्दाः । १७१८ । ५ । १९ ।

विषयः । लाभालाभादिनिरूपकवर्गनिरूपणं । वर्णानां न्यासविधिः । स्वराणामुत्तराधररूपेण निरूपणं । योनिनिरूपणं । दग्धसमयादीनां निरूपणं । मूलाक्षरनिरूपणं । जीवितमरण-सुख दुःख-जय-पराजयादिनिरूपणं । कालनिरूपणं । चक्रपटलनिरूपणं । लग्नभेदे वर्णानामवस्थानात् फलभेदकथनमिति निष्कर्षः ॥

---

**No. 84.** चयनप्रदीपः । By नरसिंह वाजपेयी । Substance, palm-leaf, 15×1 inches. Folia, 51. Lines, 3 on a page. Extent, 1,000 slokas. Character, Uria. Date ? Place of deposit, Dāmodarpur Śāsana, zilla Puri, Late Paṇḍit Gopināth Misra. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः । अविघ्नमस्तु ।
एकाद्याहीनसत्रादिरपि सम्यगनुष्ठितः ।
यद्भिमनोरथप्राप्तिस्तस्मै नु चरये नमः । (?)

श्रीनृसिंहं नमस्कृत्य कात्यायनमुनीन् गुरून् ।
चयनस्य प्रदीपोयं नृसिंहेन प्रणीयते ॥
अग्निः सोमक्रतोरङ्गमनारभ्य श्रुतोऽप्यसौ ।
लिङ्गाद्वाक्यादिभिकश्च नियतो हि महाव्रते ॥
न स्यादग्निष्टोमसंस्थे विद्यामग्निनिधानतः ।
अग्निष्टोमपरं वाक्यं विज्ञतावेव सङ्गतं ॥ इत्यादि

End. एवं साङ्गैभिनिर्वृत्ते चयने इतः परं त्यजेत् ।
यावज्जीवं पक्षिमांसं × × वर्षति धावनं ॥
नोपेयाद्वनितां शूद्रामथ धर्म्मो युगान्तरे ।
द्वितीयचयने भार्य्यां क्षत्रां वैश्याञ्च वर्जयत्
तृतीयचयने विप्रो ब्राह्मणीमपि वर्जयेत् ।
चयन्तु नियमः पुंसः सम्भवेन कलावपि ॥
... ... ... ... ... ...
इत्यग्निचिद् वाजपेयी नरसिंहविनिर्मितः ।
चयनस्य प्रदीपोऽस्तु प्रीतये सुरवैरिणः ॥

Colophon. इति श्रीमहामहोपाध्यायाग्निचिद्वाजपेयिनरसिंहमिश्रविरचितचयनप्रदीपः समाप्तः शम्भुकरमिश्रेण लिखितोऽयं चयनप्रदीपः ।

विषयः । यज्ञविधिविधानं ।

---

**No. 85.** जगन्मोहनं । By लक्ष्मणाचार्य्यः । Substance, country-made paper, 13 x 5 inches. Folia, 243. Lines, 11 on a page. Extent, 3,600 slokas Character, Nāgara. Date ? Place of deposit, District Chāprā, P. O. Gopālganj, Harapura, Jagadeo Paṇḍit Appearance, tolerable, Verse. Correct.

Beginning. ब्रह्माम्भोजसुरासुरेन्द्रनिलयस्फुर्जत्किरीटोज्ज्वल-
ज्योतिर्लीढपदारविन्दयुगलस्तत्त्वस्वरूपो रविः ।
ब्रह्माण्डोदरसंस्थिताखिलजगद्ध्वान्तस्य संध्वंसनं
यः कुर्व्वन् सहसा जगत्यनुदिनं पर्य्येति कालात्मकः ॥

ज्योतिः शास्त्रं समग्रं प्रथमपुरुषतः स्वर्णगर्भाद्विदित्वा ।
पूर्व्वं शाते पर्य्यखिलमुनिवरगणाः प्रार्थनाद्यं चकार ॥ ?
तच्चेदं विश्वरूपं बहुपदनिकरैर्गुह्यमध्यात्मरूपं ।
शश्वत् सर्व्वप्रकाशं ग्रहचरितविदां निर्मलं ज्ञानचक्षुः ॥
स्कन्धद्वय दृष्टविचित्रमर्थगम्भीरमादावधुना यदुक्तं ।
तल्लक्षणःस्कन्धमिद तृतीयं वक्ष्ये जगन्मोहननामधेय ।
+ + + + । इत्यादि ॥

End. आरभ्य सूर्य्यमूले यदा पृच्छति पृच्छकः ।
सर्व्वस भवेत्तस्य नात्र कार्य्या विचारणा । ?
देवगृहे नदीतीरे स्थाने चैव मनोरमे ।
उपविश्य यदा पृच्छेत् तदासिद्धिमवाप्नुयात् ॥
+ + + +
सुखोपविष्टे दिक्संस्थे पृच्छके सिद्धिरोचिता ।
विदिक्स्थे च दुरासीने कार्य्यसिद्धिर्नजायते ॥

Colophon. इति श्रीसारङ्गसाधुवचनामृते भट्टश्रीलक्ष्मणाचार्य्यविरचिते जगन्मोहने अङ्गस्पर्शविद्या नाम द्विनवतितमोऽध्यायः समाप्तः ॥ शुभं भूयात् ।

विषयः । १ अध्याये शास्त्रावतारकथनं । २ दैवज्ञलक्षणकथनं ॥ ३ दृष्टाध्यायः । ४ वत्सरशरीराधिपतिनिर्णयः ॥ ५ सम्वत्सरफलादिकथनं । ६ नृपमन्त्रिशस्यरसनीरसाधिपफलकथन । ७ रवेरार्द्राप्रवेशफलकथनं । ८ गुरुदयाब्दफलकथनं । ९ रविचारादिकथनं । १० चन्द्रचारकथनं । ११ भौमचारकथनं । १२ बुधचारकथनं । १३ गुरुचारकथनं । १४ शुक्रचारकथनं । १५ शनिचारकथनं । १६ राहुचारकथनं । १७ केतुचारकथनं । १८ ग्रहणफलकथनं । १९ परिवेशकथनं । २० कालनिर्णयः । २१ संक्रान्तिफलकथनं । २२ अरिष्टसूचकाध्यायः । २३ अङ्गप्रत्यङ्गस्फुरणादिनिर्णयः । २४ कालज्ञानं । २५ सुस्वप्नादिनिरूपणं । २६ दुःस्वप्नादिनिरूपणं । २७ तिथिफलादिकथनं । २८ वारादिकथनं । २९ नक्षत्रफलकथनं । ३० योगादिकथनं । ३१ करणादिनिरूपणं । ३२ तारावलादिकथनं । ३३ लग्नगुणादिफलकथनं । ३४ लग्नसंज्ञाकथनं । ३५ मुहूर्त्तकथनं । ३६ अवयोगकथनं ? । ३७ नक्षत्रदशादिकथनं । ३८ अवयोगग्रहणोत्पातकथनं । ३९ अमृतयोगसिद्धयोगादिकथनं । ४० खपत्रसंस्थापनं । ४१ गुणदोषापवादकथनं । ४२ अष्टकवर्गलक्षणं । ४३, ४४ प्रत्येकाष्टकवर्गस्थादिफलकथनं । ४५ प्रस्ताराष्टकफलकथन । ४६ गण्डादिकथनं । ४७ प्रतिपदादितिथिनिर्णयः ।

४८ रजस्वलाशुद्ध्यादिकथनं। ४९ आधानकथनं। ५० पुंसवनादिकथनं। ५१ सीमन्तोन्नयनादिकथनं। ५२ सुतकर्म्मकथनं। ५३ प्रसवयोनिभेदकथनं। ५४ प्रसवस्नानादिकथनं। ५५ प्रश्नाधिकारः। ५६ शुक्रप्रोक्तारिष्टादिकथनं। ५७ उपस्तुतिकाध्यायः। ५८ गर्ग-यम-वराहप्रभृतिप्रणीतद्वितीयप्रकारारिष्टकथनं॥ ५९, ६० राजयोगादिकथनं। ६१ राजयोगभङ्गादिकथनं। ६२ लग्नांशगुणकथनं। ६३ प्रभावफलकथनं। ६४ नक्षत्रजातकान्तर्भूतमहादशान्तर्दशानिरूपणं। ६५ पञ्चविधदशाभेदकथनं। ६६ स्त्रीजातककथनं। ६७ स्त्रीलक्षणकथनं। ६८ सामुद्रिकलक्षणकथनं। ६९ नामकरणकथनं। ७० कर्णवेधकथनं। ७१ अन्नप्राशनकथनं। ७२ चौरकर्म्मकथनं। ७३ चोरस्त्रीकाराङ्कुरार्पणकथनं। ७४ उपनयनविध्यादिकथनं। ७५ विवाहशकुनप्रश्नकथनं। ७६ कालशुद्धिकथन। ७७ महादोषकथनं। ७८ क्षत्याक्षत्यविवेकः। ७९ विवाहान्तर्भूताष्टादशकूटादिकथनं॥ ८० मुहूर्त्तनिरूपणं। ८१ विवाहलग्नद्वादशकथनं। ८२ गृहप्रवेशकथनं। ८३ वास्तुनिरूपण॥ ८४ विजययात्राप्रश्नकथनं। ८५ केतुत्रिकोणाश्रितयोगकथनं। ८६ समरयात्रादिकथनं॥ ८७ सकलदेवप्रतिष्ठापनकथनं। ८८ राजाभिषेककथनं। ८९ राज्ञां मन्त्राभिषेककथनं। ९० वस्त्राध्यायः। ९१ सर्व्वकर्म्ममन्त्रपक्षणादिनिरूपणं। ९२ अध्याये गृहगोधिकाशान्त्यङ्गस्पर्शविद्यादिकथनं॥

---

**No. 86.** जयतीर्थविजयटीका। Substance, country-made paper, 12×4 inches. Folia, 40. Lines, 12 on a page. Extent, 960 ślokas. Character, Nāgara. Date ? Place of deposit, Benares City, Pandit Vāmanācārya, Bibihāṭi. Appearance, old. Prose. Correct. Incomplete.

**Beginning.** श्रीवेदव्यासाय नमः।

श्रीरामं श्रीरमादासं दोषदूरं गुणाकरं।
वन्दे श्रीश्रीमदानन्दतीर्थपूर्व्वान् गुरूनपि॥

**End.** उपभक्तेः उत्कृष्टभक्तेः वशस्य अधीनस्य मम विभूषणं अलङ्कारः भवतु भूयात् भक्त्याक्षत + + दपिस्यात् कर्मलोके श्लाघनीयमिति भावः। (इतोनास्ति)।

**Colophon.** — — — — — — —

विषयः। माध्वजयतीर्थदिग्विजयव्याख्या।

---

**No. 87.** जातककल्लोलः। By रघुनन्दन। Substance, country-made paper, 14×5 inches. Folia, 71. Lines, 12 on a page. Extent, 1,800 slokas. Character, Nāgara. Date Sam 1913. Saka 1778? Place of deposit, District Chāprā, P.O. Gopālganj, Harapura, Jagadeo Paṇḍit. Appearance, tolerable. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः।

नत्वा जातककल्लोलं चानन्दाय विपश्चितां।
शारदेभाख्यकेशांश्च तनोति रघुनन्दनः॥
यत्नाज्जातकग्रन्थानि संविलोक्य करोति वै।
वराहमिहिरादीनां सत्यादीनाञ्च सम्मतं॥
+ + + + मेषेक राशयः स्मरजादयः।
नवभिर्नवभिः पादैः पूर्व्वतः क्रमतो धिया॥ इत्यादि।

**End.** अथ दिनदशा।

वेदघ्नं जन्मनक्षत्रं तिथिवारसमन्वितं।
पञ्चैरेव हरेद्भागं शेषं दिनदशा भवेत्॥
क्रोधं क्लान्तिं सुखं क्लेशं + + प्राप्तिं भेय पुनः।
ज्ञान कलिं महाभूति नृणां कुर्व्वन्ति खेचराः॥
श्रीमज्जातककल्लोलमकरोद्रघुनन्दनः।
श्रीमत्लक्ष्मणपुत्रस्तु सर्व्वजातकसम्मतं।
मोदायविबुधानां च शिष्याणां हेतवे मुदा।
अकारि जातकग्रन्थः श्रीमता सर्व्ववल्लभः॥

**Colophon.** इति श्रीरघुनाथपण्डितविरचिते जातककल्लोले अष्टोत्तरीदशाविंशो-त्तरीदशाफलाध्यायो द्वादशपरिच्छेदः॥ शिखी शशि पक्ष चन्द्र मिते समे गजमुनिस्वरचन्द्रमिते शके ... लिखितं॥

विषयः। १ परिच्छेदे राशिप्रभेदादिकथनं॥ २ पः रिष्टादिकथनं॥ ३ पः रव्यादि-भावफलकथनं। ४ पः षड्वर्गफलादिकथनं॥ ५ पः एकादिषड्वर्गयोगफलकथनं। ६ पः राशि-ग्रहसंयोगे योगफलादिकथनं॥ ७ पः ८ पः अयनांशगुणपद्मासादिफलकथनं। ९ पः स्त्रीभाव-फलकथनं। १० पः अष्टकवर्गादिफलकथनं। ११ पः परमायुर्लांशिकदशायोगिनीदशादिकथनं॥ १२ परिच्छेदे अष्टोत्तरीविंशोत्तरीदशाफलादिकथनं॥

**No. 88.** जातकर्मपद्धतिः । By दिवाकर । Substance, country-made paper, 10×4 inches. Folia, 8. Lines, 18 on a page. Extent, 160 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Late Babu Hariscandra. Appearance, old. Verse. Incorrect.

**Beginning.** श्रीमच्छिवाख्य + + + तितश-
चक्रचूडामणिं सज्जनवृन्दवन्द्यं
विदुर्वि यं धिषणेनतुल्य ।
तन्नौमि नित्य धिषणाभिवेत्तोः ।
श्रीकेशवश्रीपतिसुन्दरादि-
प्रणीततन्त्रादधिगत्यसार ।
प्रकाश्यते सुज्ञदिवाकरेण
पद्यांशुभिर्जातकमार्गपद्मं ॥

**End.** नन्देन्दुवर्षेण मया कृतोय
ग्रन्थोरवेः पादयुगप्रभावात् ।
शाकेनगाम्भोधिशरेन्दु तुल्ये १५४७
प्राच्यप्रबन्धान् परिभाव्य सम्यक् ॥

**Colophon.** इति श्रीसकलचक्रचूडामणिश्रीकृष्णदैवज्ञसुतश्रीमनृसिंहगणकस्य सुतेन दिवाकरेण विरचितायां जातकर्मपद्धतौ ग्रन्थ + + + प्रकारः ।

विषयः । जातकर्मविचारः ।

---

**No. 89.** जातकार्णवसङ्ग्रहः । By वराहमिहिर । Substance, country-made paper, 15×3 inches. Folia, 6. Lines, 7 on a page. Extent, 84 ślokas. Character, Bengali. Date ? Place of deposit, zilla Medinipur, post Garvetá, gram Khunverá, Babu Vaikunthanáth Chakravarti. Appearance, tolerable. Generally prose. Generally correct.

**Beginning.** श्रीश्रीरामः ।
नवशैलेन्दुरामाढ्याः शकाब्दाः कालवत्सराः ।
कल्याद्यब्दगणः प्रभाकरहतशेषादिमासैर्युतः
निघ्नः खाग्निहुताशयुक् सुरहृतैर्लब्धादिमासैर्युतः ।

अविघ्नः सतिशृद्दिंषापिअवतस्त्रिव्योमशैलोद्भूतो
चौनो × × × × शितनिशार्कं सावनोऽर्कगणः ॥ इत्यादि

**End.** प्रतीच्याञ्च तथा ज्ञेया नूने देशान्तरे सति ।
एवं क्रमेण संक्रान्ते मेषवारादिको भवेत् ।
मेषवारादितो ज्ञेया × × × × × × ॥

**Colophon.** इति श्रीवराहमिहिराचार्य्यविरचितजातकार्णवसंग्रहः समाप्तः ॥

विषयः । गुणकच्छेदकनिर्णयः । मध्यभुक्तिनिरूपणं । छायाधिकारनिर्णयः । चन्द्रग्रहण-निरूपणं । सूर्य्यग्रहणनिरूपणं । संक्रान्तिनिर्णयः ।

---

**No. 90.** जातकालङ्कारटीका (बालबोधिनी)। By नर्म्मदागिरि।
Substance, country-made paper, 12×5 inches. Folia, 112. Lines ?
Extent, 1,344 ślokas. Character, Nāgara. Date, Saṃvat 1890. Place of deposit, Benares City, Late Babu Hariścandra. Appearance, new. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

सानन्दमिति यत्पूर्व्वमिति, गणेशः अथ सिद्धिसदनं लम्बोदरं भारतीं सूर्य्यादिग्रहमण्डलं, हृदजे स्थितं निजगुरुं ताम् भक्त्या सानन्दं यथा स्यात् तथा प्रणिपत्य तत् + + + जातकं श्रीमच्छिवानुज्ञया सग्धराहत्ते कुर्व्वे अस्मि ।

**End.** गद्यैः पद्यैरिति श्रीगणेशेन अस्मिन् जातके वंशाध्यायः सम्पूर्णतः अन्यत् सर्व्वं पूर्व्वं व्याख्यातं ।

**Colophon.** इति श्रीनर्मदागिरिणावधूतेन विरचितायां बालबोधिन्यां जातका-लङ्कारटीकायां वंशाध्यायः ।

विषयः । जातकालङ्कारव्याख्या ।

---

**No. 91.** श्रीजिनशतकम् । Substance, country-made paper, 10 x 5 inches. Folia, 6. Lines, 16 on a page. Extent, 300 slokas. Character, Nāgara. Date, Saṃvat 1771. Place of deposit, Benares City, Diṅmaṇḍalācārya Mahārāja Bālacandra Suri. Appearance, new. Verse. Incorrect.

**Beginning.** ॐ नमः ।

श्रीमद्भिः स्वैर्मे ++ भि भूवनमवि ++ वत् नापरत्येष शश्वत्
सत्त्वप्रमादयेषु प्रभुषु किमिति सम् म ++ मे वोपवक्राः,
स्वर्थ्यैः वौर्य्यादिद्वार्थ्या दभि भवितु मिवा ++ शवोयश्च दीप्राः ।
प्रोत्सर्थ्यै ++ यत्प्रशैवन (...) भुवः सश्रिये ++ नाङ्घ्रिनोवः ।

**End.** यां रचां वा विवेकी बहुविषविपदां भेदिकां दैन्यमूल्यान्
युष्मान् मान्यागमण्यान् नव न ++ शया वामसौ वाग् विधेयात् ।

**Colophon.** इति श्रीजिनशतके वर्णसा वाग्वर्णसो नामचतुर्थः परिच्छेदः सम्पूर्णः
सवत् १७७१ चैत्र पूर्णिमायां ।

विषयः । जिनस्तुतिः ।

---

**No. 92.** जिनसहस्रनाम । Substance, country-made paper, 10 x 5 inches. Folia, 4. Lines, 13 on a page. Extent, 120 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Diṅmaṇḍalācārya Mahārāja Bālacandra Suri. Appearance, very old. Verse. Incorrect.

**Beginning.** श्रीसर्व्वज्ञाय नमः ।

सर्वज्ञामपि कर्णाभ्यां शृण्वन् वाचा समुच्चयन्
जीवः पीवरपुण्यश्रीर्लभते फलमुत्तमम् ॥

**End.** बन्ध्यानां सुतदं ++ चौषा ++ जीवितप्रदं
++ सर्वविध्वंसी श्रवणात् पठनात् जपात्
इति श्रीअर्हत् सहस्रनामसमुच्चये दशमः प्रकाशः ।

**Colophon.** इति श्रीअर्हत्सहस्रनाम सम्पूर्णम् ।

विषयः । जिनसहस्रनामकथनम् ।

---

**No. 93.** जिनस्तुतिमाला । Substance, country-made paper, 10×5 inches. Folia, 7. Lines, 15 on a page. Extent, 280 slokas. Character, Nāgara. Date, Saṃvat 1834. Place of deposit, Benares City, Diumaṇḍalācārya Mahārāja Bālacandra Suri. Appearance, old. Verse. Correct.

**Beginning.** अथ प्रथमपत्रं नास्ति ।

नमत् (...) न्यभिनम्दननन्दिता सुरवधूः परमोदरः ।

भरकरीन्द्रविदारणकेशरिम् सुरवधूनयनः परमोदरः ।

**End.** अपयचिरचिरे ++ कटोत्कट कष्टोत्कटे

संश्रिते भवशोकल +++

विकेपरमवस्तरां मजाराव सम (...) भायाति भायाजिते

वासनाचारतारावलम्बमहा ।

**Colophon.** इति श्रीमहावीरस्तुतिः ।

विषयः । जिनस्तुतिः ।

---

**No. 94.** ज्ञानाङ्कुरमञ्जरी । Substance, country-made paper, 8×3 inches. Folia, 9. Lines, 9 on a page. Extent, 200 slokas. Character, Bengali. Date ? Place of deposit, Chakradhá *via* Naráyanganja, Pandit Pūrṇa Candra Bhaṭṭācāryya. Appearance, old. Verse and prose. Generally correct.

**Beginning.** ॐनमः सर्व्वज्ञ ।

त्रिलोचनं नमस्कृत्य जगदीशं दिगम्बरं ।

गौतमादौ मया प्रोक्ता ज्ञानाङ्कुरमञ्जरी ॥

अथ गौतमादिभिः कालावेदने युगपद्वक्तृभिः प्रश्ने कृते विषयपार्थक्य

ज्ञानाय चूडामणेः प्रश्नाक्षरे नाना प्रश्नान् पर्य्यालोच्य चार्य्याचतुष्टयमाह ।

अकचटतपयशा कविकुलशित सौम्यजीवशौरीणां चन्द्रस्य च निर्दिष्टा

मातृशौ × × ॥ इत्यादि ।

**End.** अथ मध्ये × × चिह्नयोः प्रकारान्तरं । यद्यथा पुनः ।

(अतः परं खण्डितं)

विषयः। प्रश्नाक्षरानुसारेण लग्ननिरूपणं। तेनैव जन्मलग्नज्ञाननिरूपणं। लग्ननिरूपणा-द्राशिनिरूपणं। प्रश्नाक्षरेण जीवधातुमूलनिरूपणं। देवनिरूपणं। मनुष्यनिरूपणं। पक्षि-निरूपणं। पद्निरूपणं। क्षितिजादिनिरूपणं।

---

**No. 95. ज्येष्ठमाहात्म्यम् (जैमिनीयं)।** Substance, country-made paper, 15 × 5 inches. Folia, 42. Lines, 14 on a page. Extent, 420 ślokas. Character, Nāgara. Date ? Place of deposit, Benares City, Late Babu Hariścandra. Appearance, new. Verse. Correct.

**Beginning.** श्रीगणेशाय नमः।

नत्वा साम्बरमानाथं द्युमणिं सात्मजाम्बिकां।
ज्येष्ठमासस्य माहात्म्यं वक्ष्ये प्रीत्यै विदां भुवि॥
सुवर्णेतरशैलेन्द्र सुखासीन जटाधर।
उपगम्येश्वरी माता जगतां हिमशैलजा॥

**End.** भविष्यन्ति नरा गौरि
दिव्यदेहाजनेश्वराः।
यद्भीष्टं च तेषां + + मच्चैं स्यात् कृपया मम॥

**Colophon.** इति जैमिनीये ज्येष्ठमाहात्म्ये भीष्मयुधिष्ठिरसंवादे द्वादशोऽध्यायः।

विषयः। ज्येष्ठमासमाहात्म्यवर्णनम्।

---

**No. 96. ज्योतिर्मणिः।** Substance, country-made paper, 11 × 3 inches. Folia, 30. Lines, 5 on a page. Extent, 480 ślokas. Character, Bengali. Date ? Place of deposit, zilla Mayamansing, parganá Aṭiyá, post Jāmurki, grām Hálālia, Paṇḍit Śaśibhúṣan Bhaṭṭācāryya. Appearance, fresh. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय।

निमज्य ज्योतिरब्धौ च सारमाकृष्य साम्प्रतम्।
ज्योतिर्मणिरियं प्रोक्ता बालानामाशुबुद्धये॥

अथ वाराः। रविसोममङ्गलाश्च बुधो जीवः सितः शनिः।
एतानि वारनामानि पूर्व्वमुक्तानि सूरिभिः॥ इत्यादि।

**End.** अथ पक्षपरिमाणवचनं ।

मासान्ते पक्षस्यान्ते पर्य्यांकाद्ये देवे स्वाप्नीः ।

कान्तं वक्त्रं हन्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत्

कुत्स्नामः प्रातंश्चेतो राहुःक्रूरः पाद्यात्

तस्माद्धान्तेश्वर्य्यास्यान्ते शर्य्यकान्ते कर्त्तव्या ॥

(अतः परं खण्डितं)

विषयः । शारनिरूपणं । नक्षत्रनिरूपणं । तेषामधिपतिनिरूपणं । केन्द्रादिसंज्ञाकथनं । राश्याधिपकथनं । राशिनक्षत्रविभागकथनं । वारवेलाकथनं । गृहप्रवेशकालादिनिरूपणं । भुमिकम्पकारणनिरूपणं । संक्रान्त्यादिनिरूपणं । गुरुचक्रनिरूपणं । शुक्रादीनामष्टवर्ग-निरूपणं ॥ पक्षपरिमाणवचनकथनं ॥

---

**No. 97.** ज्योतिषरत्नं । By कमलाच्च शर्म्मा । Substance, country-made paper, 14×3½ inches. Folia, 21. Lines, 4 on a page. Extent, 210 ślokas. Character, Bengali. Date ? Place of deposit, Elángā *via* Tángail, Babu Nīlkamal Bhaṭṭācāryya, zamindar. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ॥

प्रणम्य कालिकापादं कमला(क्ष)चेण शर्म्मणा ॥

क्रियते ज्योतिषां रत्नं विदुषां तुष्टिहेतवे ॥

प्रतिपत्षष्ठी एकादशी नन्दा

द्वितीया सप्तमी द्वादशी भद्रा ।

तृतीया अष्टमी त्रयोदशी जया ।

चतुर्थी नवमी चतुर्दशी रिक्ता ।

पञ्चमी दशमी पूर्णिमा पूर्णा ॥

नन्दाभद्राजया रिक्ता पूर्णा च तिथयः क्रमात् ॥ इत्यादि ॥

**End.** चन्द्रतो यदि वारिलग्नतो द्वादशद्वितीयराशिगामिनः ॥

शुक्रवाक्पति-शशाङ्कनन्दना कागमनकथाखि प्रच्छतः ॥

इत्यादि (अतः परं खण्डितं)

विषयः। सिद्धियोगकथनं ॥ राशिकथनं। दशाविभागकथनं ॥ यात्राकालनिरूपणं ॥ विवाहकालनिरूपणं ॥ अथ गोधूलिप्रशंसाकथनं ॥ पञ्चाङ्गतादीनां कालनिरूपणं ॥ गर्भादिदोषकथनंपूर्व्वकं तेषां शान्तिकथनमित्याद्यावश्यकीयज्योतिर्वचनानां संग्रहणं ॥

---

**No. 98.** ज्योतिष्टोमविहारकारिका। Substance, country-made paper, 11 x 5 inches. Folia, 12. Lines, 2 on a page. Extent, 50 slokas. Character, Nāgara. Date ? Place of deposit. Benares, Vāmanācārya. Appearance, new. Verse. Correct.

**Beginning.** प्राग्वंशः षोडशायामो द्वादशव्याम इष्यते।
प्राग्वंशात् पश्चिमे भागे पत्नीशालाचतुष्पदा ॥
वेदेर्विमानं सौमिक्याः क्रमैर्द्विर्द्वादशाङ्गुलैः।
आदित्रिंशत्तु दिवि चन्द्रद्वियुगभूमिषु ॥

**End.** पश्चात् ततस्तदर्द्धन्तु दक्षिणोत्तरतः क्षिपेत्।
+ + + मध्यतुल्यांशकायया तस्य शंकवः ॥
इति पदमानं। इत्येकपदमानेन सौमिका वेदिरीरिता।

**Colophon.** इति पदमानं समाप्तं ॥

विषयः। आपस्तम्बसूत्रोक्ताग्निष्टोमविहारनिर्माणविधानं।

---

**No. 99.** ज्योतिष्टोमविहारकारिकाव्याख्या। Substance, country-made paper, 11 x 5 inches. Folia, 12. Lines, 7 on a page. Extent, 200 slokas. Character, Nāgara. Date ? Place of deposit, Benares, Vāmanācārya. Appearance, new. Prose. Correct.

**Beginning.** अथ कर्मकाण्डकलापे अतीव निष्णाततरः कश्चिदविकल्पः पुरुषः सर्व्वेषां सप्तसूत्राणां प्रकृतिभूतज्योतिष्टोमसम्बन्धिविहारस्य प्रतिपादकानां मध्यमकारिकाणां गूढार्थत्वात् सुखतोपलब्धये व्याख्यानमारभते ॥

**End.** "इत्येकं पदमानेन सौमिकी वेदिरीरिता" इति। इरिता इतीतिकथनं त्रिमवादिश्लोकाश्रयेणेति ज्ञातव्यं ॥

**Colophon.** इति श्रीदेवयाज्ञिकवाचेष शारदानन्दयज्वना विरचितं पदमानेन सोमविहारप्रतिपादकानां मध्यमकारिकाणां विवरणं समाप्तं ॥

विषयः। ज्योतिष्टोमविचारप्रतिपादककारिकाव्याख्या ॥

---

**No. 100.** ज्योतिःसारः। By रमाकान्त। Substance, country-made paper, 20×5 inches. Folia, 6. Lines, 7 on a page. Extent, 180 slokas. Character, Bengali. Date ? Place of deposit, Sákräil *via* Tangail, Pandit Hariscandra Tarkaratna. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ॥

नत्वा श्रीनाथमालोक्य ज्योतिर्ग्रन्थान् समासतः।
ज्योतिःसारं रमाकान्तो वक्ति बालावबुद्धये ॥
तत्रादौ जातकगणन ॥
मेषादयोऽपि मीनान्ता राशयो लग्नसंज्ञकाः ॥
यस्य मासस्य यो राशिस्तत्र सूर्य्योदयः।
तत् सप्तमे चास्तं प्रथमलग्नारम्भे उदयः ॥ इत्यादि ॥

**End.** स्वराशौ जीवफलं।
आद्याष्टमे बन्धुवियोगदुःखं।
अन्यं चतुर्थे धनहानिर्भोगः ॥
षष्ठे च रोगः कलहस्तृतीये।
समूलनाशो दशमस्थजीवे ॥ (अतःपरं खण्डितं)

विषयः। जातकगणनं। नामाद्यादिनिरूपणं। पताकीनिरूपणं। ग्रहद्वारनिर्णयः। वस्त्रनिर्णयः। द्रेक्काणफलनिरूपणं। चौराफलकथनं। लग्ननिरूपणं। स्वराशौ जीवफलनिरूपणं ॥

---

**No. 101.** टीकासर्व्वस्वं (अमरकोषव्याख्यानम्)। By सर्व्वानन्द। Substance, palm leaf, 14×1 inches. Folia, 60. Lines, 5 on a page. Extent, 2,100 slokas. Character, Uriá. Date ? Place of deposit, Puri, Sañkara Maṭha. Appearance, old. Prose. Generally correct.

**Beginning.** श्रीगणेशाय नमः ॥

वर्हिष्ठो वर्हापीडः प्रविरपरो वालपल्लवोटेन।
मेदुरमुदिरश्यामलरुचिरो व्याद्वेव गोविन्दः ॥

सुदंशौ धीराणां न गुणलवगर्व्वान्नमपरि.
श्रमः किञ्च स्वार्थस्तदिह विबुधाः चन्तुमुचितं ।
इति ये सत्सुयात्कुमतयो नूतनतया
खलास्तेमी चैया गुरुषु पुनरप्यञ्जलिरयं ॥
अथटीकासर्व्वस्वं दशटीकावित् करोत्यमरकोषे ।
श्रीमत् सर्व्वानन्दो वन्द्यघटीयार्त्तिहरपुत्रः ॥ इत्यादि ॥

End. निकुञ्जकुञ्जावित्यनेन अर्थोपसर्गनिष्टत्तिः
उदयमित्योदयमुपमानैरादिति ॥

Colophon. इति वन्द्यघटीय श्रीसर्व्वानन्दकृतौ टीकासर्व्वस्वे शैलवर्गः ॥
(अतः परं खण्डितं)

विषयः । अमरकोषस्य व्याख्यानं ॥

---

**No. 102.** ठाणाङ्गसूत्रम् । Substance, country-made paper, 12 x 4 inches. Folia, 78. Lines, 30 on a page. Extent, 3,900 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Dinmaṇḍalācārya Mahārāja Bālacandra Sūri. Appearance, old. Prose. Correct.

Beginning. श्री कोकापार्श्वनाथाय नमः ।
सुयं मे आउ सन्तेणं भगवया एवमक्खायं एगे आया एगेद (...) एगा-किरिया एगेलोए, एगेअलोए, एगेधम्मे, एगेअधम्मे, एगेधम्मे, एगेधम्मे, एगे-बन्धे, एगेमोक्खे, एगेपुण्णे, एगेपावे, एगेआसवे, एगेसम्बरे,

End. दसपवे सोगाढापोग्गला अनन्ता पण्णत्ता दससमतठितासो पोग्गला अनन्ता पण्णत्ता दसगुण कालगा अनन्ता पोग्गला अनन्ता, एवं वण्णेहिं गन्धेहि रसेहिं यासेहिं दसगुण पो (...) क्खा पोग्गला अनन्ता पण्णत्ता.

Colophon. सम्मत्तं च उड्डाणमिति .

विषयः । जैनमते धर्माधर्मादिशरीरस्थगुणादीनां वर्णनम् ।

---

**No. 103.** तत्त्वसारः ( तन्त्रम् ) । Substance, country-made paper, 10 x 4 inches. Folia, 21. Lines, 5 on a page. Extent, 225 ślokas. Character, Bengali. Date ? Place of deposit, Cakradhá, *viá* Nārāyanganj, Paṇḍit Kālicandra Vidyābhūṣan. Appearance, old. Verse. Generally correct.

**Beginning.** ॐ नमो भवाय ।

कैलासशिखरे रम्ये नानारत्नविभूषिते ।
आनन्दभैरवो देवः पप्रच्छानन्दभैरवीं ॥
श्री आनन्दभैरव उवाच ।
निगमागमशास्त्राणि मया तया प्रकाशितं । (?)
तेषां मध्ये सारभूतं वद कान्ते कुलेश्वरि ॥
पुरा श्रीतन्त्रशास्त्रोक्ताच्छ्रुतं बहुविधं मया ।
श्रीरुद्रयामलाख्यञ्च तथाचोत्तरतन्त्रकं ॥
शक्तियामलमाख्यातं तथान्यं विस्तरं प्रिये ।
योगसारं समाख्यातं तथा गुह्यं वदस्व मे ॥
श्री आनन्दभैरव्युवाच ।
योगसारं तत्त्वसारं सर्व्वशास्त्रोत्तमोत्तमम् ।
प्रधानं सर्व्वशास्त्राणां तन्त्रादीनाञ्च भैरव ॥
यो न जानाति देवेश तस्य सिद्धिर्न जायते ॥
... ... ... ...
तत्त्वसारं विना वत्स तत्सर्व्वं निष्फलं भवेत् ॥
... ... ... ...
श्री आनन्दभैरव उवाच ।
तत्त्वसारस्य माहात्म्यं वदस्वानन्दभैरवि ॥ इत्यादि ।

**End.** यो यो चरेत् इमं मन्त्रं तस्य सिद्धिर्न जायते ।
अवश्यं श्मिदां पीत्वा सर्व्वकर्म्माणि साधयेत् ?
न पिवेद् यदि मोहेन तस्य सिद्धिर्न जायते ॥

**Colophon.** इति श्रीतत्त्वसारे दशमः पटलः ।

विषयः । इति तत्त्वसारे १म २य पटलः । तत्त्वसारे गुप्तितत्त्वविधाने तृतीयः पटलः ।

तत्त्वसारे ४र्थः पटलः । तत्त्वसारे श्रीमदानन्दभैरवभैरवीसम्वादे कवचसंस्कारो नाम पञ्चमः पटलः । तत्त्वसारे चण्डीमाहात्म्योपाख्याने षष्ठः पटलः । तत्त्वसारे ७म पटलः । ८मः पटलः । नवमः पटलः । दशमः पटलः । सामान्यतो योगविधायकोयं ग्रन्थः ।

निगमतत्त्वसारः ।

---

**No. 104.** तत्त्वामृततरङ्गिणी । By कुलानन्दनाथ । Substance, palm leaf, 20 × 2 inches. Folia, 23. Lines, 5 on a page. Extent, 690 slokas. Character, Bengali. Date 1660. Place of deposit, Gaṇeśamahallā, Benares City, Rāj Guru's Maṭha Appearance, very old. Verse correct.

**Beginning.** प्रणम्य गुरुपादाब्जं ज्ञानानन्दरसाश्रयं ।
तनुते तन्त्रसाराङ्ग तत्त्वामृततरङ्गिणीम् ॥
"तन्त्रे" दशशतदलपद्मे प्रोल्लसत् पूर्णचन्द्रे ।
स्थिमधचिवधिराङ्ग हंसपीठान्तरस्थः ।
अभयवरकराब्जो योग (...) कुलकमलविलासी पातुमां देवदेवः ॥

**End.** सिद्धान्तः करणोधीरो निर्विकारः सदासुखी । ( ... ... )
श्रीकुलानन्दनाथेन श्रीनाथपदसेविना ।
आनीतेऽयंस्वर्णदीव तत्त्वामृततरङ्गिणी ॥

**Colophon.** इति तत्त्वामृततरङ्गिण्यात्मविवेकोनाम सप्तमतरङ्गः ॥
शून्यषड्रसचन्द्रे च गते शाकेऽसिते बुधे ।
वैशाखे लिखिता शून्यैस्तत्त्वामृततरङ्गिणी ॥

विषयः । प्रथमतरङ्गे गुरुशिष्यलक्षणम् . द्वितीयतरङ्गे शिष्यसम्बोधनम् . तृतीयतरङ्गे जीवचित्तसम्वादः . चतुर्थतरङ्गे षडाम्नायविवेचनम् . पञ्चमतरङ्गे प्रकृतिपुरुषविवेचनम् । षष्ठतरङ्गे अभेदकथनम् . सप्तमतरङ्गे आत्मविवेकः .

---

**No. 105.** तत्त्वार्थरत्नाकरः By प्रभावचन्द्र । Substance, country-made paper, 12 × 5 inches. Folia, 94. Lines, 22 on a page. Extent, 2,266 slokas. Character, Nāgara. Date, Saṃvat 1697. Place of deposit, Benares City, Diṅmaṇḍalācārya Māhārāja Bālacandra Sūri. Appearance, old. Incorrect.

**Beginning.** अस्य प्रथमतः १० संख्यावधिकपचारिं न सन्ति .
सत्यवस्तु शुभवस्तु . बिम्बप्रतिमाचैत्या ( . ) . मित्र सखाद् महात्मादि

( ... ) वाम्मरो . सत्य उत्तमवार्त्ता जानाति . असत् को विशेषः ( ... ... ... ... ) मिथ्यात्ववैरीशत्रुअसत्यपुरीवस्तु . अवलोकं यतियथा, इच्छानुच्छन्दचारी, अर्द्धमत्तवत् माद्य कोऽयवत् . कुज्ञान प्रशारसंग्राम एवा ( . ) दि कुज्ञान जानाति . ज्ञानकुज्ञान एवं विशेषः . इति भावार्थः .

**End.** एवं विचार्य्य मोक्षपदार्थभावनाज्ञातव्या इति भावार्थः . इति तत्त्वार्थाधिगमे मोक्षशास्त्रे दशमोध्यायः .

**Colophon.** इति तत्त्वार्थरत्नाकरग्रन्थे सर्व्वार्थसिद्धौ मुनिश्रीधर्मचन्द्रशिष्यप्रभावचन्द्रविरचिते ( ... ... ) श्रोतव्यनिमित्तं मोक्षपदार्थकथनं नाम दशमोऽध्यायः . इति सर्व्वार्थसिद्धसूत्र टीका समाप्ता . संवत् १६९७ । कार्त्तिक सुदि .

विषयः । सर्व्वार्थसिद्धसूत्रव्याख्या ।

---

**No. 106.** तलवकारोपनिषत्पदभाष्यटिप्पनम् । Substance, country-made paper, 15 × 4 inches. Folia, 6. Lines, 18 on a page. Extent, 216 ślokas. Character, Bengali. Date ? Place of deposit, Gaṇeśa-mahallā, Benares City, Rāj Guru's Muṭha. Appearance, old. Prose. Correct.

**Beginning.** ॐ नमः परमात्मने .

यच्छ्रोत्रादेरधिष्ठानं चक्षुर्वागाद्यगोचरं ।
स्वतोऽध्यक्षं परंब्रह्म नित्यमुक्तं भवामितत् ॥

केनेषितमित्यादिकां तलवकारशाखोपनिषदं व्याचिख्यासुर्भगवान् भाष्यकारोऽयं प्रत्यग्गोचरस्यात्मनःसंसारित्वादसंसारिब्रह्मभावस्य उपनिषत्प्रतिपाद्यत्वासम्भवात् निर्विषयत्वाद्व्याख्येयत्वमाशङ्क्याहङ्कारसाक्षिणः संसारित्वप्रापकप्रमाणविषयत्वात् ब्रह्मताप्रतिपादने विरोधासम्भवात् सविषयत्वात् व्याख्येयत्वं प्रतिजानीते केनेषितमित्यादिना ॥

**End.** यो वै सर्व्वेश्वरो विष्णुः सर्व्वात्मा सर्व्वदर्शनः ।
शुद्धः बोधाम्बुधिः साक्षात्सोऽहं नित्योभयः प्रभुः ॥

इत्थं तलवकारस्य भाष्ये शङ्करनिर्मिते।
पदभाष्याभिधानेऽस्मिन् निरमायि सुटिप्पणम् . ॥

**Colophon.** इति तलवकारोपनिषत्पदभाष्यटिप्पणं सम्पूर्णम् .

विषयः । तलवकारोपनिषत्शङ्करभाष्यव्याख्या .

---

**No. 107.** ताजिकपद्धतिटीका, By केशवाचार्य्य । Substance, country-made paper, 14 x 3 inches. Folia, 7. Lines, 9 on a page. Extent, 250 slokas. Character, Bengali. Date ? Place of deposit, Zilla Midnapur, Post Garvetá, Grām Khuñverā, Babu Vaikuṇṭha Náth Cakravarti. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ श्रीसूर्य्याय नमः ।
यत्ताजिकोक्तं फलं बायनोत्थं
क्रमाद्विनोक्तमन्यैर्यतो दुर्गमेतत् ।
क्रमाद्वच्मि तत्पद्धतिं प्रस्फुटोक्त्या
गणेशं नमस्कृत्य बालावबोधां ॥
ज्ञात्वा जन्म खगोदयान् प्रतिसमं जन्मार्कतुल्यो रवि
र्यत्रा × × सुखं भवेद्गतसमाः शैलाब्धिदिग्घ्नाः कृताः ।
खाभ्रैर्जनिवासरादिसहिताख्याश्चागैरब्दादिनेऽ
ब्दादिः सावयवे स्फुटोऽब्जजनिजो मासः क्वचि × × युक् ॥
अस्यार्थः । स्फुटशास्त्रानुसारेण ग्रहान् उदयान् द्वादशभावान् स्फुटीकृत्य वर्षलग्नं कार्य्यं । इत्यादि ।

**End.** यत्र लग्नपतिर्वर्ष नवांशपतिस्तयोर्मित्रत्वे अथवा × दृष्टिः अथवा चन्द्रदृष्टौ उच्चस्थौ वा तदालग्नः शुभप्रदौ तयोर्वैरत्वेदथवा नीचस्थौ तौ अथमितौ तदा न शुभौ एवं धनादिषु भावेषु तदधिपतिस्तन्नवांशपतिश्च विचार्य्यः । पूर्व्ववत्तयोरपि मित्रत्वादौ शुभं वैरा × बद्ध × मिति मिश्रे मिश्रफलं ज्ञेयं ॥

**Colophon.** इति श्रीकेशवाचार्य्यरचितताजिकपद्धतिटीका समाप्ता ।

विषयः । ताजिकपद्धतेर्व्याख्यानं ।

---

**No. 108.** तिथिनिर्णयः । By भट्टोजिदीक्षित । Substance, country-made paper, 10 x 4 inches. Folia, 33. Lines, 13 on a page. Extent, 900 slokas. Character, Nāgara. Date, Saṃvat 1878. Place of deposit, District Chāprā Sisoyā, Paṇḍit Rāmanāth Misra. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

चैत्रशुक्लप्रतिपदि वत्सरारम्भः ।

सचौदयिकी तिथिर्ग्राह्या ।

चैत्रे मासि जगत् ब्रह्मा ससर्ज प्रथमेऽहनि ।

शुक्लपक्षे समग्रं तु तदा सूर्योदये सतीति ॥

हेमाद्रौ ब्रह्मोक्तेः । इत्यादि ।

**End.** चरकुजाभ यजन्तौ भूत्वा त्वं चोलिवासिनी ।

अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भवेत (?) इति दिक् ।

इति चोलिका निर्णयः ॥

**Colophon.** इति पदवाक्यप्रमाणज्ञ-श्रीलक्ष्मीधरसूरेः सूनुना भट्टोजिदीक्षितेन विरचितस्तिथिनिर्णयः समाप्तः ॥ संवत्—१८७८ ॥

विषयः । प्रतिपदादिसकलतिथिव्यवस्थाकथनं ॥ चोलिकानिरूपणञ्च ॥

---

**No. 109.** तिथिनिर्णयः । वैद्यनाथ । Substance, country-made paper, 10 x 4 inches. Folia, 22. Lines, 11 on a page. Extent, 500 slokas. Character, Nāgara. Date, Saṃvat 1821. Place of deposit, District Chāprā. P.O. Gopālganj, Harapurā Paṇḍit Jagadeo. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

विश्वामित्रवरयोगिना भगवतानन्तेन भट्टेन च ।

श्रीमद्धोजभट्टमुखे तिथिगणो यो निर्णयोऽङ्गीकृतः (?) ॥

सोऽयं सम्प्रति वैद्यनाथविदुषा संक्षेपतः कथ्यते ।

ज्योतिर्वेदविदामनिन्दितधियामानन्दसम्भूतये ॥

तत्रैकभक्तानां चतुर्भूतास्तु प्रतिपदादितिथिषु साधारणो निर्णयः ।

**End.** प्राक्पक्ष एव कथितोऽनु वषिष्ठमुख्यैः ।

जीवस्तु पक्षेऽपि बुधः शिशुविवर्ज्यः ॥

**Colophon.** इति शुक्लास्तादिनिरूपण । अनेकवाक्यविरोधानेकवाक्यांशमम्पत्ति पादनादितिथिनिर्णयोद्देशकनामाष्टमः परिच्छेदः, निरूपणं समाप्त ॥

संवत—१८९१ ।

**विषयः ।** प्रतिपदादिसकलतिथिव्यवस्थादिकथनं ॥

---

**No. 110.** तिथिविवेचनम् । By रमापतिसिद्धान्त । Substance, country-made paper, 12×4 inches. Folia, 72. Lines, 6 on a page. Extent, 1800 slokas. Character, Bengali. Date, S'aka 1332 Place of deposit, Cakradhá *viá* Nārāyanganja. Pandit Kālī Candra Vidyābhūsan. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय ।

प्रायशः सङ्कल्पानामेव कर्म्मणामारम्भकत्वात् आदौ स एव निरूप्यते । कायवाङ्मनोभिरचितं कर्म्म फलाय समर्थमिति श्रुत्या त्रयाणां सङ्कल्पमुक्तं । तच केन रूपेण कस्याङ्गत्वमित्यत आह मनसा संकल्पयति वाचा अभिलपति कर्म्मणा चोपपादयतीति । इत्यादि ।

**End.** अथ सुवर्णदानं । भविष्ये ।

तथा तस्यां तृतीयायां यद्देवि ब्राह्मणाय वै ? ।
माषषाड्शमात्रं वा सुवर्णं यः प्रयच्छति ॥
सद्देमरत्नखचिते विमाने सर्व्वगे शुभ ।
सर्व्वपापविनिर्म्मुक्तः सर्व्वभूषणभूषितः ।
ततो रुद्रस्य सायुज्यं प्राप्नोति च न संशयः ॥

... ... ... ... ...

तथाच ब्राह्मे ।
सर्व्वदानानि नियमा यायाश्चैव तपांसि च ।
यज्ञो दानं तथा जप्यं श्राद्धन्तु सुरपूजनं ।
मन्वाद्या × × कृतं सर्व्वं कोटिकोटिगुणं भवेत् ॥

**Colophon.** इति श्रीरमापतिसिद्धान्तविरचितं तिथिविवेचनं समाप्तं ॥

पक्षत्रिकालेन्दुमिते च शाके
कृता भवानीचरणारविन्दं ।

नभस्तत्त्वा × ×, × × × × ।
× × × यत्नाद् रघुनाथशर्म्मा ॥ श्रीकृष्णाय नमः ॥

विषयः । संकल्पनिरूपणं । मलमासविवेचनं । मासपक्षतिथिनियमनं । नक्षत्रविवेचनं । विकल्पविचारः । युगादिविवेचनं । जन्मतिथिव्यवस्था । प्रतिपदादितिथिकृत्यनिरूपणं । भीमाष्टमी, अशोकाष्टमी, श्रीरामनवमीनिरूपणं । दुर्गोत्सवकृत्यनिरूपणं । देवीमाहात्म्य-पाठफलकथनं । चातुर्मास्यव्रतादिविवेचनं । पञ्चकृत्यनिरूपणं । दानव्यवस्था, तत्र भूमिदान-विधिफलादिकथन । सुवर्णदानविधिफलादिकथनञ्च ।

---

**No. 111.** तिमिरचन्द्रिका । By रामरत्न । Substance, country-made paper, 20 × 5 inches. Folia, 56. Lines, 7 on a page. Extent, 1400 ślokas. Character, Bengali. Date ? Place of deposit, Śivapur *via* Tangail, Paṇḍit Bhavāninath Bhaṭṭācāryya. Appearance, old. Verse. Generally correct.

**Beginning.** गुरवे नमः

चिदावासरशर्व्वरी समकरा चैतन्यचन्द्रोदया
नानाचारविचारविश्वविमलज्ञानैकगम्याकृतिः ।
कापिध्वान्तकृतान्तदर्पदलिता पाप × × × × ।
× × × × विधायिनी हृदि मया संस्थाप्यते पूर्णिमा ॥
कलौ स्वल्पायुषः सर्व्वे साधकाः स्वल्पबुद्धयः ।
विधास्ये साधनं तेषां येन तूर्णं भवेत् × × ॥
नानागमसमुद्रेभ्यो नानानिगमसागरात् ।
विविच्य पद्यरत्नानि निबध्नन्ति समासतः ॥
श्रीरामरत्नरचितां कृत्याकृत्यतमोहृतां ।
× × × × पश्यन्तु गुरवः प्राचीनपद्यनिर्म्मितां ॥
विविधविबुधकृतबहुविधमतानुसारेण जडबुद्धीनां
नानाविधसंशयतिमिरौघो आशुसद्दूरीकरणाय
तिमिरचन्द्रिका नाम संग्रहो दीप्यतु ॥ इत्यादि ॥

**End.** यदि नो पश्यते नूनं तदा नैव शुभं भवेत् ।
एवं ज्ञात्वा सर्व्वेशानि शान्तिस्वस्त्ययनञ्चरेत् ॥
इति शिवावलिः ।

**Colophon.** इति तिमिरचन्द्रिकायां सप्तदशोल्लासः ॥ ( अतः परं खण्डितं )

विषयः। दीक्षादिनिर्णयः। प्रातःकृत्यनिर्णयः। दन्तधावनादिनिर्णयः। अन्तर्यागादि-विधिनिर्णयः। स्नानशोधनादिपूर्व्वकपूजानिर्णयः। उपचारादिनिर्णयः। निशापूजा-विधानादिनिर्णयः। यन्त्रादिनिर्णयः। मालादिनिर्णयः। नित्यजपादिनिर्णयः। कुण्डादि-निर्णयः। साधनविधाननिर्णयः।

---

**No. 112.** तुलापुरुषपद्धतिः By मानसिंह। Substance, country-made paper, 14×4 inches. Folia, 19. Lines, 7 on a page. Extent, 400 ślokas. Character, Bengali. Date ? Place of deposit, Cakradhā *via* Nārāyanganja, Paṇḍit Kailās Candra Bhaṭṭācāryya. Appearance, old. Prose and verse. Generally correct.

**Beginning.** ॐ नमो गणेशाय।

प्रणम्य गोविन्दपदारविन्दं नत्वा गुरूंश्चैव तथा द्विजेन्द्रान्।
धर्म्मार्थकामादिचतुष्टयार्थं प्रकुर्व्वते सद्धविदुषां मतेन॥
विचार्य्य धर्म्मशास्त्राणि दानसागरसंस्थितां।
क्रियते मानसिंहेन तुलापुरुषपद्धतिः॥
तथाच लिङ्गपुराणे अयने द्वे युगाद्यायां तथा च विषुवद्वये।
चन्द्रसूर्य्योपरागे च वैशाख्यां कार्त्तिकीषु च॥
कर्त्तुश्चोपचयोपेते तथा मन्वन्तरासु च।
चतुर्द्दश्यष्टमीचैव श्रीपञ्चम्यां विशेषतः॥ (?)

— — — — —

समीपेऽश्वत्थवृक्षस्य देवब्राह्मणसन्निधौ।
सर्व्वदानानि देयानि नात्र कार्य्या विचारणा॥ इत्यादि

**End.** ब्रह्मविष्णुगोविन्दप्रतिमात्रयं एकशय्यायां स्थापयेत्। शिव × × देव-द्वयमन्यशय्यायां स्थापयेत्। शिरोदेशे नागकुम्भं निद्राफललाभार्थं पञ्च-रत्नान्वितं वस्त्रयुग्माच्छादितं स्थापयेत्। ततो गुरुः सर्व्वशान्तिसाधारणं-निद्राकलशं जपेत् —

**Colophon.** ( अतः परं खण्डितं )

विषयः। तुलापुरुषदानविषयकविधिनियमादिकथनं।

---

**No. 113.** तृचकल्पपद्धतिः By वैद्यनाथ। Substance, country-made paper,1 5 x 5 inches Folia, 11. Lines, 17 on a page. Extent, 275 slokas. Character, Nāgara. Date ? Place of deposit, BenaresCity, Govinda Bhaṭṭa. Appearance, new. Prose and verse. Correct.

**Beginning.** श्रीगणेशाय नमः ।

देशकालौ स्मृत्वाऽमुकगोत्रोत्पन्नस्यामुकशर्म्मणो ममामुकरोगस्य समूल-
नाशद्वारा क्षिप्रारोग्यप्राप्तये तृचकल्पोक्तप्रकारेण तृचस्य न्यासपूर्व्वकं मण्डल-
लेखनं पीठपूजनं प्रधानमूर्त्तिपूजां —इत्यादि ।

**End.** आरोग्यसिद्धेर्विचिकीर्षितस्य सूर्य्यार्घ्यदानस्य शुभप्रयोगः ।
देवाकरिर्मूलगतानुरूपं श्रीवैद्यनाथो रचयाञ्चकार ॥

**Colophon.** इति श्रीशौनकोक्ततृचकल्पपद्धतिः .

विषयः । वेदोक्तभगवद्भास्करार्घप्रदानादिविधानम् .

---

**No. 114.** तैत्तिरीयकभाष्यटीका By प्रकटार्थकार. Substance, country-made paper, 15 x 4 inches. Folia, 23. Lines, 22 on a page. Extent, 621 slokas. Character, Bengali. Date ? Place of deposit, Gaṇeśamahallā, Benares City, Rāja Guru's Maṭha. Appearance, new. Prose. Incorrect.

**Beginning.** ॐ श्रीगुरवे नमः ।

यत् प्रकाशसुखाभिन्नं यस्मान्नेव प्रकाशितं ।
विद्यतं शास्त्रणे ब्रह्म तत् स्वा x x हृश्यनिर्भयम् ॥
यजुर्वेदशाखाभेदं तैत्तिरीयकोपनिषदं व्याचिख्यासु र्भगवान् भाष्यकारस्तत्-
प्रतिपाद्यं ब्रह्मजगज्जन्मादिकारणत्वेन तटस्थलक्षणेन मन्दमतीन् प्रति
सामान्येनोपलक्षितं सत्यज्ञानादिना च स्वरूपलक्षणेन विशेषतो विनिश्चितं
नमस्कारच्छलेन संक्षेपतो दर्शयति, यस्माज्जातमिति ।

**End.** तैत्तिरीयकभाष्यस्य शङ्करस्य द्रढीयसः ।
स्फुटार्थं x x कामेभ्यो भिरमायि सुटिप्पनम् ॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीप्रकटार्थकारविरचिता भृगुवल्लीभाष्य-
टीका समाप्ता . समाप्तेयं तैत्तिरीयकभाष्यटीका .

विषयः । तैत्तिरीयकोपनिषद्व्याख्या .

---

**No. 115.** तोताद्रिमठस्थगुरुपरम्परा। Substance, country-made paper, 9 x 4 inches. Folia, 5. Lines, 7 on a page. Extent, 80 slokas. Character, Nāgara. Date ? Place of deposit, Śankara Maṭha, Paṇḍit Madhusūdan Tirthasvámi. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीमते रामानुजाय नमः। अस्मद्गुरुभ्यो नमः। अस्मत् परमगुरुभ्यो नमः। अस्मत् सर्व्वगुरुभ्यो नमः। श्रीमते रामानुजाय नमः। श्रीपराङ्कुशदासाय नमः। श्रीमद्यामुनमुनये नमः। श्रीराममिश्राय नमः। श्रीपुण्डरीकाक्षाय नमः। श्रीमन्नाथमुनये नमः। श्रीमते शठकोपाय नमः। श्रीमते विष्वक्सेनाय नमः। श्रियै नमः। श्रीधराय नमः।

अस्मद्देशिकमस्मदीयपरमाचार्य्यानशेषान् गुरून्
श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ (?) मुनिं यामुनं।
रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं
सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रये॥
श्रीस्तनाभरणं तेजः श्रीरङ्गेशयमाश्रये।
चिन्तामणिमिवोद्भान्तमुत्सङ्गेऽनन्तभोगिनः॥ इत्यादि।

**End.** शठरिपुयतिराट् श्रीरम्यजामातृयोगि-
प्रवरगगनभूभृद्‌द्योगिसद्यातभक्तिं।
शमदमगुणपूर्णं नौमि रामानुजाख्यं
परिचितनिगमान्तद्वन्द्वमार्गं यतीन्द्रं॥

विषयः। रामानुजादिश्रीधरान्तगुरूणां प्रत्येकं कतिपयश्लोकैः स्तवनं।

---

**No. 116.** त्रिकाण्डमण्डनभाष्यम्। Substance, country-made paper, 14 x 7 inches. Folia, 75. Lines, 22 on a page. Extent, 1,650 slokas. Character, Nāgara. Date, Saṃvat 1923. Place of deposit, Benares City, Vāmanācāryya. Appearance, new. Prose. Correct.

**Beginning.** भुजङ्गा भुजगा यस्य वामगा वामलोचना।
सर्व्वदः सर्व्वदा दिश्यात् सशिवः स शिवः स्वयं। १।
यत्त्वेनैतिर्जगति सिध्यति धर्मतत्त्वं।
तत्र प्रमाच वचनैः हृतकेतरैस्तत्।

तेषां प्रकाशनदशा च गुरोः सकाशात् ।
तस्मात्तमेनमचमादरतो नमामि ॥

**End.** यं स्थाने प्रायश्चित्तनिर्णयाधिकारे बहुविस्तरो विस्तारो यस्य एवं भूतं प्रायश्चित्तान्तरं छन्दनादिषु वक्ष्ये वदिष्यामि इतीत्यादि पूर्व्ववद्याख्येयं ॥

**Colophon.** इति त्रिकाण्डमण्डनविवरणे पुनराधेयनिमित्तनिर्णयो नाम तृतीयकाण्डं ॥

विषयः । त्रिकाण्डमण्डनस्य पुनराधेयनिर्णयपर्य्यन्तव्याख्या .

---

**No. 117.** त्रिपुटी । Substance, country-made paper, 12 x 4 inches. Folia, 1. Lines, 16. Extent, 30 slokas. Character, Bengali. Date ? Place of deposit, Puri, Śankara Matha. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः परमात्मने ।
शब्दस्पर्शरूपरसगन्धादयो विषयाः पञ्चपृथिव्यादयश्च परमात्मनः समुत्पन्नाः पृथिव्यापस्तेजोवायुराकाशमिन्द्रियाणि अहङ्कारो बुद्धिर्मन्नानवृक्तं । तत्र पृथिवी धारणे । आपः पिण्डीकरणे क्लेदने च । तेजः पचने प्रकाशने च । वायु र्व्यूहने । आकाशमवकाशप्रदाने । इत्यादि ।

**End.** जाग्रत्स्वप्नसुषुप्तेष्वेकत्र वा जाजागरिते वैश्वानरः स्वप्ने तैजसः ? सुषुप्ते प्राज्ञः । स एव निर्विशेषस्तुरीयः स परमात्मा सोऽहमिति ॥

**Colophon.** इति त्रिपुटी समाप्ता ।

विषयः । संक्षेपेण वेदान्तवेद्यपञ्चभूतेन्द्रियजीवब्रह्मादीनां प्रकाशनं ।

---

**No. 118.** त्रिपुटीटीका । By आनन्दगिरि । Substance, country-made paper, 12 x 4 inches. Folia, 3. Lines, 16 on a page. Extent, 100 slokas. Character, Bengali. Date ? Place of deposit, Puri, Śankara Matha. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमो भगवते वासुदेवाय ।
अध्यात्मादिप्रभेदेन यद्विद्या विद्यते ।
तद्ब्रह्म स्वात्मकं सत्यमानन्दज्ञानमव्ययं ॥

मुमुक्षूणां मोक्षसाधनसम्यग्ज्ञानमपेक्षमाणानामनायासेन तत्प्राप्त्यर्थं त्रिपु-
रीतिप्रकरणमारभमाणः सुखप्रतिपत्त्यर्थमध्यारोपापवादन्यायेन तत्त्वमुपदि-
दिक्षुरध्यारोपप्रक्रियया प्रथमं सृष्टिमन्वाचष्टे शब्देति । इत्यादि ।

**End.** संप्रति अथ × × विवक्षायां परिशोधितं तत्पदार्थमनूद्य तस्य तस्य
प्रत्यगात्ममात्रत्वं कथयति सोऽहमिति । इति शब्देन प्रकरणं परिसमापयन्
यथोक्तवाक्यार्थपरिज्ञानादज्ञान × × × × निवृत्त्या पूर्णपरमा-
नन्दाविर्भावेन कृतकृत्यो भवतीत्येतद्भवद्यो भवतीति ॥

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्यशुद्धानन्दपूज्यपादशिष्यभगवदानन्द-
गिरिविरचितं त्रिपुरीविधिसंज्ञं समाप्तं ॥ श्रीगणेशाय नमः । श्रीकृष्णा-
र्पणमस्तु ॥

विषयः । संक्षेपेण पञ्चभूतजीवब्रह्मादिज्ञापकस्य त्रिपुरीतिनामकस्य प्रकरणस्य व्याख्यानं ।

---

**No. 119.** त्रिवर्णाचारः By जिनसेन । Substance, country-made paper, 14×6 inches. Folia, 265. Lines, 12 on a page. Extent, 6,625 slokas. Character, Nāgara. Date Saṃvat 1844. Place of deposit, Benares City, Diümaṇḍalācārya Mahārāja Bālacandra Sūri. Appearance, new. Verse. Correct.

**Beginning.** ॐ नमः सिद्धेभ्यः ।
तज्ज्योतिः परं ज्योतिः समं समस्तैरनन्तपर्य्यायैः ।
दर्पणतल इव सकला प्रतिफलति पदार्थमालिका यत्र ॥
परमागमस्य जीवं निषिद्धजात्यन्धसिन्धुरविधानं ।
सकलनयविलसितानां विरोधमथनं नमाम्यनेकान्तम् ॥

**End.** धर्मार्थकामाय कृतं पुराणं श्रीजैनसेनेन शिवार्थनापि ।
स्वच्छस्वधर्मेषु सदा रता ये कुर्व्वन्तु तेऽभ्यास महाजनास्ते ॥

**Colophon.** इत्यार्षे श्रीमत्भगवन्मुखारविन्दात् विनिर्गते श्रीगौतमर्षिपादपद्माराधकेन
श्रीजिनसेनाचार्य्येण विरचिते त्रिवर्णाचारे उपासकाध्ययनसारोद्धारे कृत-
शुद्धिकथनीयं नाम अष्टादश पर्व्व इति त्रिवर्णाचारः समाप्तः. संवत् १८४४.
वैशाखशुक्लाष्टम्यां चन्द्रवासरे. त्रिलोकीनाथकरमध्ये रामपालब्राह्मण ॥ ?

विषय । प्रथमपर्वणि पूजकलक्षणम्, द्विजातिनिर्णयप्रकरणम्, ऋषभदेवस्य पञ्चकल्याणकवर्णनम्, द्विजोत्पत्तिः भरतराजदृष्टषोडशस्वप्नफलवर्णनञ्च. द्वितीयपर्वणि सामरिकादि कथनम्. तृतीयपर्वणि शौचाचारकथनम्. चतुर्थपर्वणि स्नानवस्त्राचमनसन्ध्यार्घनित्यतर्पणनित्यनैमित्तिकश्राद्धादिकं ऋषितर्पणञ्च. पञ्चमपर्वणि गृहस्थधर्मः, देवपूजानिरूपणञ्च. षष्ठपर्वणि जिनतर्पणम्, जिनस्तुतिकथनञ्च. सप्तमपर्वणि मन्त्रोपदेशकथनम्. अष्टमपर्वणि लोकसंस्थानमध्यलोकस्थगवर्णनञ्च. नवमपर्वणि जिनचैत्यालयागमनादिभोजनान्तक्रियाप्रतिपादनम्. दशमपर्वणि स्वव्यापारकथनम्. एकादशपर्वणि शयनविधिः, रात्रिकृत्यं, गर्भोत्पादनं, शरीरवर्णनञ्च. द्वादशपर्वणि गर्भाधानादिपञ्चदशक्रियास्वरूपवर्णनम्. त्रयोदशपर्वणि मोञ्जीबन्धनादिशान्तवर्णनम्. चतुर्दशपर्वणि ब्रह्मस्वरूपवर्णनम्. पञ्चदशपर्वणि विवाहविधिवर्णनम्. षोडशपर्वणि वर्णलाभादिपञ्चक्रियावर्णनम्. सप्तदशपर्वणि आशौचप्रकरणवर्णनम्. अष्टादशपर्वणि सूतकशुद्धिकथनम्.

---

**No 120.** "दयानन्दपराभवः." Substance, country-made paper, 8 × 3 inches. Folia, 6. Lines, 7 on a page. Extent, 84 slokas. Character, Nāgara. Date ? Place of deposit, Bibihāṭi, Paṇḍit Vāmanācārya. Appearance, new. Verse. Correct.

**Beginning.** श्रीमद् हयग्रीवाय नमः ।
श्रीमद्वैदिकसंवेद्यरघुराजेन्द्रचिन्तनात् ।
योऽप्राप्नोद्रघुराजत्वं वाञ्छवेशः स इन्द्रतात् ।
श्रीकाशीनगराधीशकाशीराजसमाज्ञया ।
दयानन्दो निरानन्दो वामनेन प्रकाश्यते ॥

**End.** मत एवं पराभूतं दृष्ट्वा श्रीमदीश्वरीप्रसादनारायणाभिधं महाराजं सर्व्वे जनाः जयशब्दैः समं तोषयन्ति ॥

**Colophon.** इति दयानन्दनिराकृतिप्रपञ्चसारः सुधीभिर्विभावनीय इति शम्.

विषयः । वामनाचार्य्यकर्तृकदयानन्दपराजयः.

---

**No. 121.** दानदीपावलिः । By योगीश्वर । Substance, palm leaf, 13 × 1 inches. Folia, 128. Lines, 6 on a page. Extent, 2300 slokas. Character, Uria. Date ? Place of deposit, Sāsana Dāmodarpur, Puri, Paṇḍit Sadāśiva Kāvyakaṇṭha. Appearance, old. Prose and verse. Incorrect.

**Beginning.** श्री गणेशाय नमः ।

जय सर्व्वसुराराध्य जय संसारमोचन ।
जय विघ्नतमश्चन्द्र जय सिद्धिप्रदायक ॥
लम्बोदरमवलम्बे जयमविलम्बे ददानमपबाधं ।
यन्मौलिचन्द्रलेखा सिन्दूरितामनसद्वया जयति ॥
यश्चन्द्रान्वयसिन्धु × × × × निरयं
स कंसमथनमण्डलीं मण्डयन् × × × ।
लीलक्ष्माधरशेखरप्रविलसज्जयो महाभूतिमान्
योऽयं भृत्यस्वभावप्रभवेनयवरश्रीमिद्गात्मभक्तिः ।
श्रीमन्निःशङ्कभानुः क्षितिपपदयुगयोऽर्घं
... ... ... ... (?)
(श्रौतस्मार्त्तादि तगुपचयपरिचया भारताद्युक्तकीर्त्तौ) (?)
नित्यानुष्ठानतैला सुचरितविनया सत्यवैश्वानराखिं ।
श्रद्धाभाजां बुधानां विरचयतु चतुर्वर्गमार्गप्रकाशं
× × × × ॥

देवल-याज्ञवल्क्यौ शङ्खलिखितगौतमवृद्धवशिष्ठवशिष्ठा विष्णुबृहस्पति पराशराङ्गिरसयोगियाज्ञवल्क्यशातातपमरीचिचदिष्टाः (?) सम्वर्त्तापस्तम्बौ लघुहारीतः महारीतः दानव्यासो व्यासः सलघुकात्यायनः बोधायन व्याघ्रपक्षिकप्रभृतयश्चाक्षिखितानि (निरूप्य (?) निपुणं स्मृतयः षट्त्रिंशन्मतं यावत्) । ... ... ... महाभारतमन्वादिनोक्तानि (?) ज्योतिषनामागम-मतैर्व्याख्यैः प्रमाणकैरनुस्तानि । अथ दानपरिभाषा । इत्यादि ।

**End.** स्वर्गप्राप्तिकामोऽहमित्युक्त्वा पुत्रपौत्रयोर्भ्यां प्रियदर्शां भूमिं ददामि स्वस्ति दिशोकारान्तं पूर्व्ववत् ।

**Colophon.** इति श्रीदानदीपावल्यां भूमिदानविधिर्नामचतुर्विंशतितमोऽध्यायः ।

( अतः परं खण्डितं )

विषयः । इति श्रीमन्महाराजाधिराजगजपतिनिःशङ्कभानोर्लक्षितपदकमलधूलिकला-पालङ्कृतपाचयोगीश्वरविरचितायां दानदीपावल्यां पुण्यदेशकीर्त्तनं नाम प्रथमोऽध्यायः । पात्रा-पात्रनिरूपणं २ । ३ । तुलापुरुषदानं । ४ । हिरण्यगर्भमहादानविधानं । ५ । ब्रह्माण्डमहा-दानविधानं । ६ । गोसहस्रमहादानविधानं । ८ । कामधेनुमहादानविधानं । ९ । हिर॰

श्वरथमहादानविधानं। १०। हेमहस्तिरथमहादानविधानं। ११। पञ्चलाङ्गलकमहादान-विधानं। १२। धरामहादानविधानं। १४। कल्पलतामहादानविधानं। १५। सप्तसागर-महादानविधानं। १६। रत्नधेनुमहादानविधानं। १७। महाभूतघटमहादानविधानं। १८। धान्याचलादिदशाचलविधिः। १९। २०। गोप्रदानगुडधेन्वादिधेनुदानविधिः। २१। चन्द्र-दैवताकालकृतगोदानविधिः। २२। भूमिदानविधिः। २४।

---

**No. 122.** दानरत्नप्रदीपिका। By चन्द्रचूडः। Substance, country-made paper, 17×4 inches. Folia, 10. Lines, 7 on a page. Character, Bengali. Date ? Place of deposit, Pāruikurī, Chittagong, Paṇḍit Kālīkānta Vācaspati. Appearance, tolerable. Prose and verse. Correct.

**Beginning.** ॐ नमो गणेशाय।

स्वर्गारोहणसोपानदानसागरपद्धतिः।

क्रियते चन्द्रचूडेन दानरत्नप्रदीपिका॥

प्रातरशौचोत्तरदिने नद्यादौ स्नात्वा प्रेतक्रियाधिकारी × × × × × × × तदनु कृतनित्यक्रियः गुणकुलद्विजयोरनुज्ञां गृहीत्वा दानस्थानमाविशेत्॥ इत्यादि।

**End.** नमो ऽयं सवत्सालङ्कारसोपकरणगजो विष्णुदैवतकः।

अद्येत्यादि कृतैतत् सवत्सालङ्कारसोपकरणगजदानकर्म्माच्छिद्रमस्तु॥

खण्डितत्वात् समाप्तिवाक्यं नास्ति।

**Colophon.**

विषयः। तिलदानविधिकथनं। भूम्यासनादिदानविधिकथनं॥ धेनुदानविधिकथनं॥ दोलादानविधिकथनं। गजाश्वनौकादिदानविधिकथनं॥

---

**No. 123.** दिव्यसिंहकारिका। Substance, palm leaf, 17×1½ inches. Folia, 75. Lines, 6 on a page. Extent 2700 ślokas. Character, Uria. Date ? Place of deposit, Dāmodarpur Śāsana, Zilla Puri, late Paṇḍit Gopīnāth Miśra. Appearance, old. Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः। अविघ्नमस्तु।

वात्स्यायनसमुत्पन्नो दिव्यसिंहाभिधः सुधीः।

एकतः स्मृतिवाक्यानि सोपपत्त्यै लिखाम्यहं।

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ॥
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणं ।
श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् हि मानवः ।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखं ।
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग् भवेत् ॥ इत्यादि ।

**End.** दग्धलवः पिबेदापो गायत्र्या श्राद्धभुक् द्विजः ।
भुक्त्वा च पार्श्वयमाद्ये प्राणायामान् षडाचरेत् ॥
श्रीरामः । इति ।

**Colophon.**

विषयः । सनैव हते कालदीपश्राद्धदीपाख्ये स्मृतिसंग्रहे यानि श्राद्धाद्युक्तानि कर्त्तव्यकर्म्मोपधायकानि वचनानि इह तु तेषामेव संक्षेपेण वर्णनं ।

---

**No. 124.** दुर्गोत्सवचन्द्रिका । By रामचन्द्र गजपति । Substance, palm leaf, 17 × 1½ inches. Folia, 77. Lines, 4 on a page. Extent, 1540 ślokas. Character, Uṛia. Date ? Place of deposit, Dāmodarpur Śāsana, Zilla Puri, Paṇḍit Sadāśiva Kāvyakaṇṭha. Appearance, tolerable. Verse. Generally correct.

**Beginning.** श्रीजगदुर्गायै नमः ।
चञ्चोदान् चिकुरच्छलेन तपनं सिन्दूरबिन्दूपधेः
पीयूषद्युतिबिम्बमाननमिषा ज्योत्स्नां स्मितच्छद्मना ।
बिभ्रत् कुचकैतवाद्गिरिकुलव्याजाद् वसुन्धरी-
रर्द्धाङ्गाय शिवस्य विश्वनिधये मूलप्रकृत्यै नमः ॥
सकलागमसारतत्ववेत्ता स कलावानिव सर्व्वतोऽनवद्यः ।
तनुते भुवि रामचन्द्रदेवनरपालोत्सवभक्तिमञ्जिकायाः ॥
यश्चोदेति यशोविधुर्जितजगतामानन्दमापादयं-
स्ताराभिः परिपन्थिपान्थरमणीनयनैर्बाष्पाम्बुभिः ।
का चिन्ता लवणाम्बुधौ वलयतामप्याप्ते व्याप्तिभिः
क्षीराब्धिरचलमचलपरीवेषाय नेष्टाय ते ॥ (?)

कर्णः कर्णपथं न याति न स ते वैरोचनी रोचते
मोधाः कामदुघा बभूवुरनघा मौघोदधीचिः स्वयं ।
अल्पः कल्पतरुः परेषुगणना का नाम कामस्पृशां
यस्मिन् दानविधानमानवसमाधानव्रते जाग्रति ॥
वदान्यमनुयुञ्जाने जनोयमनुशंसते ।
अयं मूकायते नूनं वदान्यमिति पृच्छति ॥
श्वेतद्वीपं शिशिरशिखरी लम्भते पद्मयुग्म
सम्भे पादौ वहति कनककाधरस्वर्णशोभां ।
ताराहारापतिरपि तनूर्धूतपक्षानुकारी
यस्याः स्वैरं स्फुरति भुवने यस्य सा कीर्त्तिवंशी ॥
भीतेव प्रथमं विरोधिवसुधा यद्वाजिराजीखुर
क्षोभोद्भूतरजश्छलेन रिपुभिः साकं द्युलोकं गता ।
गत्वा तत्र धरानुपालनयशःस्वर्वारनारीगणै-
र्गीतं निर्भयतामुपागतवती भूयः परावर्त्तते ॥
स निशम्य सम्यगखिलागमोदितं विबुधैर्विचिन्त्य वसुधानुमोदितः ।
शरदुत्सवे गिरिभुवः समर्चनचन्द्रिकां दिशति सम्मतां सतां ॥
मन्त्राः सन्ति क्षितिधरभुवो लक्षणो दक्षिणेऽपि (?)
प्रायो मार्गे जपकृतविधौ ये फलं साधयन्ति ।
षट्त्रिंशाक्षरमनुरयं किन्तु सञ्चिन्तितानां
नानार्थानां क्षमा इति ततः कीर्त्त्यते तत् प्रयोगः ॥
एषा विद्या सर्व्वभावानवद्या पद्या मुक्तेः सेविता मुक्तिकामैः ।
यद् वा दत्ते कामना भक्तिमुक्तः सद्योदत्ते तं तमेवास्य कामं ॥
ईशानसंहितादौ यदीक्षितं कालिकापुराणादौ ।
यदबोधि रुद्रयामले सम्मोहनसम्मुखोक्तेषु ॥
यदलम्भि तन्त्रसागरसारसतन्त्रमन्त्रवरवाक्यैः ।
अन्यासु संहितासु च तन्त्रेष्वथवा पुराणेषु ॥
तत्तत् विषये निबन्धे यदिदं विषये विलोकितं किमपि ।
दुर्गायाः शरदुत्सवविषये तत्तत् निबध्निमः ॥ इत्यादि ॥

End. इत्येवं दशदिक्षु भौतिककविं दत्ताय तत्ता यथो

चन्द्राभीं मुदितां विचिन्त्य हृदये सच्चिन्मयेदीक्षितं ।
सौवर्णीमथ तां विशेषविभवैरानीय सम्मानयन्
स्वागारे विनिवेशयेदिति विधिर्भूपस्य वाञ्छाविधिः ॥
यावद् व्यावभ्रयं दधति मधुकराः कार्मुकं मन्मरारे-
र्यावत् तद्वैरिकश्चे स भवतु भगवान् भूषणं पन्नगेशः ।
यावत् नभस्यप्रायी विचरति रमथानुगूढ़ × × ×
तावच्छ्रीरामचन्द्रक्षितिपतिरचिता निर्मितिः प्रीतिदात्री ॥

**Colophon.** इति श्रीरामचन्द्रनृपतिविरचिता दुर्गोत्सवचन्द्रिका सम्पूर्णा । श्रीदुर्गे तव चरणे ।

विषयः । श्रीदुर्गा-जपविधि-होमविधि-तर्पणविधि चतुर्विधदेवभावनादुर्गोत्सवं नवविध काष्ठदेवीविधानादिविवेचनं ।

---

No. 125. देवीमाहात्म्यटीका ( सुबुद्धिगी ) सुबोधिनीनाम्नी By माधवानन्द चक्रवर्त्ती । Substance, country-made paper, 18×4 inches. Folia, 37. Lines, 8 on a page. Extent, 750 slokas. Character, Bengali. Date, Śaka 1712. Place of deposit, Elanga *viá* Tangail, Babu Nilkamal Bhaṭṭācāryya, Zemindar. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमश्चण्डिकायै ।

प्राक्किल भगवद्बादरायणान्तेवासी जैमिनिर्महाभारतविषयेषु केष्वतीत-पदार्थेषु सन्दिहानो मार्कण्डेयं महर्षिमुपगम्य प्राचचीत × × अथ तेनोक्तं नायमस्माकं कथावसर इति सर्व्वार्थाभिज्ञान् विन्ध्याचलनिलयां-चतुरः पक्षिणः पृच्छेति अमुना उपदिष्टोऽसावपि तथैवाकार्षीत् । पुनर्जैमिनिप्रश्नानुरोधात् सर्व्वादिपुराणाख्यानावसरे तुरीयपुरा-णाख्यायां मार्कण्डेयभागुरिसम्वादात्मकमिति वाक्यमनुवर्त्तयन्तोऽष्टमसम्बन्ध-रमुपक्रममाणा धर्म्मपक्षिण ऊचुर्मार्कण्डेय उवाचेति इत्यादि ।

**End.** एवमिति । एवं प्रकारेण सुरथः देव्या वरं लब्ध्वा सूर्य्यात्मजः सन्नासाद्य सावर्णिर्मनुर्भविता क्षत्रियर्षभः क्षत्रियश्रेष्ठः सावर्णिर्भवितामनुरिति पुनराहत्तिः समाप्तिं द्योतयति सम्प्रदायात् ॥ तथो वायादिति चतुर्भुजेन लिखितमिदमिति । चतुष्टभागाच देवीमाहात्म्ये त्रयोदशाधिकानि

**No. 312.** **षडशीतप्रकरणटिप्पनी** । Substance, country-made paper, 12 × 4 inches. Folia, 13. Lines, 14 on a page. Extent, 738 ślokas. Character, Nāgara. Date ? Place of deposit, Diṅmaṇḍalācārya Mahārāja Bālacandra Sūri, Benares City. Appearance, old. Prose. Incorrect.

**Beginning.** नमः सर्व्वविघ्नभि(वि)दे सर्व्वविदे श्रीपार्श्वनाथाय ।

इह प्राप्तसकलमानुष्यादिसामग्रीकेन पुंसा श्रावक + + + + + धारभूते श्रीधर्म्म एव प्राक् प्रयतितव्यमित्याकलय्य नेमिचन्द्रनामा श्रावकस्तदुपदिष्ट-शैताढ्यं संविग्नगुरुं परीक्षन् चिरस्य परिभ्रम्य तत्कालवर्त्ति संविग्नशैताढ्यं सुविजनागमज्ञं श्रीजिनपतिसूरिं सुगुरुं लब्धवान्, ततस्तत्पार्श्वात शुद्धदेवादितत्त्वः(?) परोक्ष देवादित्वेषु स्वरूपन्ति इदं प्रकरणं चक्रे (?) ।

**End.** नानाविधमार्गरता भव्याः पठन्तु शृण्वन्तो जानन्तु अर्थपरिज्ञानेन ततश्च तत्पाठपरिज्ञानाभ्यां यान्तु । शिवं शिवशब्दोपादानं चावसानमङ्गलार्थम् ।

**Colophon.** अस्फुटितवीजकमेतत् षडशीतप्रकरणस्य सद्गिरः ।

अलिखत् लेखकवद्यं शिष्यः श्रीधवलचन्द्रगुरोः ॥

इति षडशीतप्रकरणावचूरिः ।

**विषयः ।** षडशीतप्रकरणव्याख्या ।

---

**No. 313.** **षोड़शी** । Substance, country-made paper, 15 × 3 inches, Folia, 1. Lines, 6 on a page. Extent, 24 ślokas. Character, Bengali. Date ? Place of deposit, Khunvedā grāma, Post Garvetā, Zilla Midnāpur, Babu Vaikuṇthnātha Cakravarti. Appearance, tolerable. Verse. Correct.

**Beginning.** ॐ नमः श्रीसूर्य्याय ।

अथ षोड़शी । दक्षिणस्यां दिशि निदध्यादिति मध्यरेखायां कृत्वा दक्षिणा-ग्रान् कुशान् निधाय तत्र सतिलोदकैरावाह्य वक्ष्यमाणमन्त्रैः पिण्डान् दद्यात् । इति गोविन्दमिश्रः ( भागचतुष्टयकृतानि ) तत्र दक्षिणाग्रान् कुशानास्तीर्य्य आवाहनं कुर्य्यात् । यथा तिलोदक मन्त्रोक्ता ।

ॐ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।

आवाहयिष्ये तान् सर्व्वान् दर्भपृष्ठे तिलोदकैः ॥

ॐ मातामहकुले ये च गतिर्येषां न विद्यते ।
बान्धवाश्चाबान्धवाश्च ते सर्व्वान् दर्भपृष्ठे तिलोदकैः । इत्यादि ।

**End.** ॐ या ब्रह्मणो ये पितृवंशजाताः
मातुस्तथा वंशभवा मदीयाः ।
कुलद्वये ये मम दासभूताः
भृत्यास्तथैवाश्रितसेवकाश्च ।
मित्राणि सख्यः पशवश्च वृक्षा
दृष्टा ह्यदृष्टाश्च कृतोपकाराः ।
जन्मान्तरे ये मम संगभूता-
स्तेभ्यः स्वधा पिण्डमिदं ददामि । •

**Colophon.** इति षोडशी ।

विषयः । लुप्तपिण्डोदकेभ्यः पुत्रदारवर्जितेभ्यः मातापितृकुलोद्भवेभ्यः पिण्डदानं ।

---

No. 314. षोडशीपूर्त्तिकारिका । Substance, country-made paper, 8×5 inches. Folia, 8. Lines, 12 on a page. Extent, 160 slokas. Character, Nāgara. Date, Saṃvat 1890. Place of deposit, Benares City, Vāmanācāryya Appearance, new. Prose. Correct.

**Beginning.** वक्ष्यते चतुरः पादानुपदध्याच्छिरोमुखे
तत्पश्चात् षोडशीयुग्मं सविशेषसमन्वितं ।१।
उपधाय यथायोगं पद्मपादानथात्मनि ।

**End.** पक्षे तु सम्बन्धः स्यात् चक्रपक्षेतु पूर्व्वतः चतस्रो राष्ट्रभृतः स्रुचनो वैश्वदेवाः क्रमात् ।

---

No. 315. सिद्धानां स्तवम् । Substance, country-made paper, 12×4 inches. Folia, 11. Lines, 12 on a page. Extent, 154 slokas. Character, Nāgara. Date ? . Place of deposit, Diṅmaṇḍalācārya Mahārāja Bālacandra Sūri, Benares City. Appearance, new. Verse. Correct.

**Beginning.** सिद्ध सिद्धत्व सुखं मसिवसिमि झखख पयास,
यं वीरं सिरि सिद्ध पाइखाओ सिवसुक्खं किमवि तुलं,

**End.** एवं सन्निकर्षहारं ग्रन्थप्रमाणे चिन्तितं शेषेषु द्वारेषु पुनः सिद्धः प्राभृतात्
भावनीयं इथ सिद्धाँच स्वरूपं लिखितं देवेन्द्रसूरीभिः इति ।

विषयः । जैनमते मोक्षस्वरूपकथनम् ।

---

**No. 316.** संक्रान्तिचन्द्रिका By राजकृष्ण । Substance, country-made paper, 18×3 inches. Folia, 2. Lines, 7 on a page. Extent, 44 slokas. Character, Bengali. Date ? Place of deposit, Chaḍābāḍi, *viâ* Tangail, Paṇḍita Digambar Smṛtitīrtha Appearance, fresh. Verse. Coriect.

**Beginning.** ॐ नमो गणेशाय ।

श्रीगोपालपदाम्भोजाचलमाध्वीकलालसः ।
श्रीराजकृष्णः संक्रान्ति-चन्द्रिकां तनुते सुधीः ॥
तत्तद्राशिविशेषतो दिनकृतो राश्यन्तरे या गतिः ।
संक्रान्तिः कथिता निषिद्धविहिते तत्क्षणे × × × ॥
कौलेयं निखिलपंचानु × × × सन्ध्यास सायन्तनी
त्याज्यं स्नानमनुष्णधूद्धसलिलैः कुर्य्यात् प्रदानादिकं ॥ इत्यादि ।

**End.** सवाजयां(?) कथित् प्रोच्य गोत्रनामादिकं वदन् ।
श्रीविष्णुप्रीतिकामः सन् स्नायादौ × × वारिधि ॥
इति श्रीराजकृष्णेन कथिता या क्रमस्थितिः ।
\+ + + + + + + + ॥
संक्रान्त्यां पक्षणे चैव न स्नायाद् यस्तु मानवः
सप्त जन्म भवेत् कुष्ठी दरिद्रश्चोपजायते ॥

**Colophon.** इति संक्रान्तिचन्द्रिका समाप्ता ॥

विषयः । संक्रान्तिनिरूपणमुखेन तत्कर्त्तव्यकर्म्मादिनिरूपणं ।

---

**No. 317.** संक्षेपशारीरकव्याख्यानं By विश्ववेद । Substance, Tāḍi-leaf, 13×2 inches. Folia, 185. Lines, 5 on a page. Extent, 4810 slokas. Character, Maithil. Date, L.S. 398. Place of deposit, Purī Sāṅkara Maṭha. Appearance, old. Prose. Generally correct.

**Beginning.** × × × × × × तत्रागुरुस्वरूपकथनं मङ्गलमा × × × ग्रन्थारम्भं प्रतिजानीते अन्वेतेति । अत्र मुरारिर्विष्णुर्जगदुपद्रव० × × प्रतिबिम्बितं परं ब्रह्मात्मपर्याय्याख्यं तस्य परमं पदं तदेव ब्रह्म मायासम्बन्धरहितं × × × × अथवा पदं ज्ञानमास्पदं सोपाधिकतया × × × यथास्पदतया वर्णते रूपं संत्यजति ॥ इत्यादि ।

**End.** यासौ श्रुत्योश्चिन्मयी शक्तिराद्या,

× × × ×

× × × ×

× × सिद्धान्तदीपः ॥

**Colophon.** इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमदानन्दवेदशिष्यविश्ववेदविरचित-संक्षेपशारीरकव्याख्याने सिद्धान्तदीपे चतुर्थोध्यायः समाप्तः ॥ ल सं ६९८ आश्विनशुक्लद्वितीयायां विलासपुरग्रामे लिखितमिदं पुस्तकमिति नमो नारायणाय । नमो भगवते वासुदेवाय ।

विषयः संक्षेपशारीरकस्य व्याख्यानं ।

---

**No. 318.** संक्षेपशारीरकसुबोधिनी by पुरुषोत्तममिश्र। Substance, country-made paper, 13 × 5 inches. Folia, 141. Lines, 10 on a page. Extent, 4935 slokas. Character, Bengali. Date ? Place of deposit, Rājaguru's Maṭha, Goṇeśa Mahallā, Benares City. Appearance, old Prose. Correct.

**Beginning.** ॐ नमो भगवते वासुदेवाय ।

कृपया करनिबद्धभूधरं केलयादलितमत्तकुञ्जरं ।
+ + + विजितपद्मसम्भवं केशवं किमपि [श्रेयवं] भजे ॥
सादरेण भगवत्परायणम् मूर्तिमन्तमिव बादरायणम् ।
रामतीर्थमिह नौमि तं गुरुं मध्याद्रि + + + मतं गुरुम् ॥

**End.** समाप्तौ भगवन्नमस्कारूपमङ्गलमाचरति, भुजङ्गसाङ्गेति,
शुभसम्प्रदाय + + + अनुसृत्य मतञ्च रामतीर्थगुरोः
एतत्प्रबन्ध + + + + + व्याकारि मया प्रयत्नेन ।
+ + संक्षेपशारीरसुबोधनदीपिका, + + सद्भिः क्लेशेन पूर्यताम् ।

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकश्रीरामतीर्थमुनिशिष्याग्निचित्पुरुषोत्तममिश्रकृतौ संक्षेपशारीरकसुबोधिन्यां चतुर्थोऽध्यायः समाप्तः ।

विषयः । संक्षेपशारीरकव्याख्या ॥

---

**No. 319.** सच्चरित्ररक्षा By वेङ्कटनाथ । Substance, country-made paper, 12 x 4 inches. Folia, 32. Lines, 9 on a page. Extent, 832 ślokas. Character, Nāgara. Date ? Place of deposit, Purī, Rājagopāla Maṭha, Mohānta Śrī Raghunandana Rāmānuja Dāsa. Appearance, fresh. Generally prose. Generally correct.

**Beginning.** श्रीमते रामानुजाय नमः ।

श्रीमद्वेङ्कटनाथाय सर्वशास्त्रार्थवेदिने ।
कवितार्किकसिंहाय वेदान्तगुरवे नमः ॥
चक्रादिशङ्खमध्यतःसुभगोर्ध्वपुण्ड्रान्
व्यक्तात्मनो भगवतश्चरणारविन्दे ।
तद्भुक्तभोगरसिकान् विदिवेन्द्रवन्द्यान्
पुंसः प्रमाणशरणान् शिरसोद्वहामि ॥
यतिपतिचरणाम्भोजरजःप्रभावेण संनिद्धशरणाः ।
विदधाति वेङ्कटेशः स्थिरामिमां सच्चरित्ररक्षां ॥
सद्भिर्धृतेषु सततं विमतिं गता ये पत्युः समस्तजगतां परमायुधेषु ।
तैरेव तान् निगमशास्त्रनिदर्शदीप्तैः शाङ्गात्मना परिणतैः प्रहरामि मूर्ध्नि ॥

इह कतिचिदतिचिरसमुचितविविधदुरितावलीमलीमसमनसः परम-पुरुषचरणारविन्दवैमुख्यसमुचितदर्शनाः सुदर्शनादिधारणे विमन्यन्ते मन्यन्ते च ।

चोदनालक्षणोऽर्थो धर्मः नचासौ प्रत्यक्षावेद्य इति प्रत्यक्षसूत्रे स्थितं । द्रव्यादीनां स्वरूपतः प्रत्यक्षाणामपि धर्मत्वेनाप्रत्यक्षत्वात् चोदनैक-समधिगम्यत्वं न विरुध्यते यथाहुः ।

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।
तेषामैन्द्रियकत्वेपि न तु रूपेण धर्मता ॥ इत्यादि ।

**End.** अतः सिद्धं प्राकृथादिभिः सुदर्शनादिकं अवश्यं धार्यं मुमुक्षुभिस्तु विशेषत इति ।
श्रीमद्वेङ्कटनाथेन सम्यगेतत् समर्थितं ।
श्रुतिस्मृतीतिहासादिसिद्धं चक्रादिधारणं ॥
अयमनघसुदृष्टिराद्विभर्त्यैवावदु-
विदितनिजसतत्वो (?) विश्वमत्वाद्भवात् ।
रचयरचनिरुद्धयन्नानां जनानां
दुरितमथनचेतादेवचोरें (?) चचीशः ॥

**Colophon.** श्रीमद्वेङ्कटनाथस्य कृतिषु संचरितरक्षायां सुदर्शनाधिकारः प्रथमः श्रीमते रामानुजाय नमः । श्रीमते निगमान्तदेशिकाय नमः । हरिः ॐ ।

विषयः । श्रुतिस्मृतिविहितसदाचारानुष्ठानानिरूपकानामत एव मुमुक्षूणां सुदर्शन-चक्रादिचिह्नानां देवादावश्यधारणत्वेन निरूपणं ।

---

No. 320. समाविवेकटीका (शिशुबोधिनी) By माधव । Substance, country-made paper, 12×5 inches. Folia, 30. Lines, 11 on a page. Extent, 660 slokas. Character, Nagāra. Date, Saṃ 1816. Place of deposit, Benares City, late Babu Hariscandra. Appearance, old. Prose. Incorrect.

**Beginning.** श्रीगणेशाय नमः ।
गणनायकं हृदयवाञ्छितं प्रणिपत्य + + + + माधवः
प्रकुरुते विहतिप्रमितान् + + + शरदि भावतः । ?

**End.** विहद्विधिश्रमणसेवितपादपद्मं गोविन्दसंज्ञसुतमाधवनिर्मितायां
श्रीवर्धतत्वविहतौ शिशुबोधवत्यां तत्वादिभाव + + + परिपूर्णिमागात् ।

**Colophon.** इति गोविन्दज्योतिर्वित्सुतमाधवविरचितायां समाविवेकटीकायां शिशुबोधिन्यां तत्वादिद्वादशभावविवरणं समाप्तिमगमत् + + संवत् १८१६ ।

विषयः । समाविवेकव्याख्या ।

---

**No. 321.** **सम्बद्धमाधवनाटकम्** by **गोविन्दकविभूषण**। Substance, palm leaf, 13 × 1½ inches. Folia, 152. Lines, 3 on a page. Extent, 2750 slokas. Character, Uriā. Date ? Place of deposit, Calcutta, Government of India. Prose and Verse. Generally correct.

**Beginning.** श्रीराधाकान्तः शरणं ।

भूतामिवतमःक्षमा प्रशमितप्रेयश्चकं रक्षमा
सुप्रीतामितकैरवा गुणनिधुपावद्रवीभावहृत् ।
गोपाक्षाम्बुजलोचनो भुवि लसत्पावोत्सवौल्को विनो
पायाद् गोकुलचन्द्रभद्रकवचापीयूषवृष्टि जगत् ॥

अपिच ।

यस्याक्षाद्रमपाङ्गरिङ्गणकलारङ्गेन गौरं परे
रङ्गं कुङ्कुमपङ्कसङ्कुलकुचश्रीश्रेमकुम्भार्पणात् ।
नाश्लिष्टद्युतिमम्बुपाविवरवाम्भोजप्रवालप्रभं
बिम्बौष्ठाधिकनिष्ठयाधरतलं तां तत्प्रियाराधये ॥

\+ \+ \+ \+

नान्द्यन्ते सूत्रधारः । अलमतिविस्तरेण । विस्तारयामि रङ्गमङ्गलभक्तिपीयूषतरङ्गिणीपूरं । यदमी सामाजिकसज्जनाश्च सज्जनाय सन्त्यजार्याः ।
तदुपचरामि चेतसैव संसारार्णवकर्णधारं भगवन्तमित्यञ्जलिं बद्धा ।
कान्तुदामप्रेमभूमप्रकाशी नृत्यामोदी यत्प्रसादोऽनुरूपः ।
कामं नित्यं मानसे मामकीये श्रीमान् नित्यानन्दनामेष्टदेवः ॥
नटीमुद्दिश्य । आर्ये तावदित इतः ।
प्रविश्य नटी । अज्ज (अज्ज-) आणवेदु ।
सूत्र । आर्ये.........गौलाचलमौलिनीलाचलसारापरमम्ब्रादम्बरस्य
...... श्रीमत्पुरुषस्य ...... भक्तजनानां ...... देवतामाराधयामः ।
नटी । अज्ज (अज्ज) यद् एव्वं एत्थ किस णाडवं ।
सूत्र । आर्ये भरद्वाजवंशावतंसावतारस्य ... ... गोविन्दकविभूषणनामधरायस्य कृरपि कथित् ।
नटी । चिरिमेषि च तस्य विसुमरेमि । किं उण आचरे ।
सूत्र । आर्ये
तस्य कृतिः कृतिचचिरं चिरं रसादिध्वनिप्रचुरं ।

नवं काव्यमुदीते मधुरं हि सम्वदमाधवं नाम ॥
तेन प्रस्तावितेन तूर्णं लब्धवर्णविधिमाराधयामः ॥ इत्यादि ।

**End.** उभौ । सानुकम्पं । तथैव वाभवौतुतरां चिराय । इति निष्क्रान्ताः सर्व्वे ॥

**Colophon.** इति श्रीसम्वदमाधवे तथ्यमनोरथो नाम सप्तमोऽङ्कः ।

विषयः । इति श्रीसम्वदमाधवे गोकुलमङ्गलो नाम प्रथमोऽङ्कः ।
इति „ निराधिरुद्-राधिको नाम द्वितीयोऽङ्कः ।
इति „ विप्रलब्धराधो नाम तृतीयोऽङ्कः ।
इति „ सानन्दगोविन्दो नाम चतुर्थोऽङ्कः ।
इति „ तथ्यमनोरथो नाम पञ्चमोऽङ्कः ।
इति „ सर्व्वनिर्व्वाणो नाम षष्ठोऽङ्कः ।
इति „ तथ्यमनोरथो नाम सप्तमोऽङ्कः ।

---

**No. 322** सम्यक्त्वकौमुदी । Substance, country-made paper, 12×5 inches. Folia, 88. Lines, 9 on a page. Extent, 1408 ślokas. Character Nāgara. Date ? Place of deposit, Digmaṇḍalācārya Mahārāja Balacandra Sūri, Benares City. Appearance, old. Prose and Verse. Incorrect.

**Beginning** श्रीसरस्वत्यै नमः ।
सम्यक्त्वाग्रजयं स्वस्य महानन्दानन्दईय ।
सम्यक्त्वकौमुदीमिनां कथां वक्ष्ये समासतः ॥
इहैव जम्बुद्वीपस्मिन् भारते भूमिभूषणं ।
आनारामद्रुमैर्वृष्टं मगधमगदूषणम् ॥

**End.** एवं विधायात्ममनः स्वपुरं विवे(...) मघत् सैवं उल्लासयन् पौरजनस्य श्रीसुयोधनराजा चकार ।

**Colophon.** इति सम्यक्त्वकौमुदीनाम्नी कथा कोषे (...) कौमुदीमहोत्सवाख्याम-गर्भिते सुयोधनस्वपदिग्विजयपुरप्रवेशवर्णनं नाम तृतीयसर्गः ।

विषयः । सुयोधनाख्यस्य कस्यचित् राजचरित्रवर्णनं जैनधर्ममाहात्म्यकथनञ्च ।

---

**No. 323.** सम्वित्प्रकाश । By गोविन्दकवीश्वर । Substance, country-made paper, 13×7 inches. Folia, 16. Lines, 17 on a page Character, Nāgara. Date, Sam 1873 Place of deposit, Harapurā, Post Gopālagañja, District Chāprā, Pandita Gaṅgādeo. Appearance, tolerable. Prose and Verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

श्रीमद्विष्णुमहेशशक्तिमखिलाकल्पं किरीटाङ्गद-

द्योतत्कुण्डलमुद्यदर्करुचिरं पीताम्बर धारिणं ।

पद्मस्य हृदयस्थकौस्तुभमणिं हस्तस्थचक्रोल्लसत्-

शङ्खाम्भोजगदं मुद विदधतं भक्ते भजेऽभीष्टदं ॥ इत्यादि ॥

**End.** प्रश्नाक्षरमात्रा चतुर्गुणीकृत्य त्रिहीना वेदयुतः युता द्वादशभागशेषे राशिः । राहोः स्थानात् सप्तमे केतुर्ज्ञेयः इति नष्टजन्मपत्रे नवग्रहानयने चन्द्रो नोक्तः तत् विचार्य्य चन्द्र आनेयः ॥

**Colophon.** इति काशकवीश्वरनन्दनगोविन्दकवीश्वरेण विरचिते सम्वित्प्रकाशकाख्ये दशपञ्चसर्गः समाप्तः ॥ संवत १८७३ ॥

विषयः । १ सर्गे भावफलादिकथनं । २ सः धात्वादिचिन्ताकथनं । ३ सः गगनादिचिन्ताकथनं । ४ सः शशिभावफलादिकथनं । ५ सः तनुभावादिकथनं । ६ सः गमनागमनप्रश्नादिकथनं । ७ सः जलप्रश्नादिकथन । ८ सः निधिप्रश्नकथनं । ९ सः युद्धफलादिकथनं । १० सः दोषज्ञानादिकथनं । ११ सः चौरप्रश्नादिकथनं । १२ सः लाभप्रश्नकथनं । १३ सः द्रव्यनिश्चयादिकथनं । १४ सः दिनचर्य्यादिकथन । १५ सः सम्वत्सरागमादिकथनं ।

---

**No. 324.** सम्बोधसत्तरि । Substance, country-made paper, 12×5 inches. Folia, 11. Lines, 4 on a page. Extent, 88 ślokas. Character, Nāgara. Date, Samvat 1811. Place of deposit, Dinmaṇḍalācārya Mahārāja Bālacandra Sūri, Benares City. Appearance, new. Verse. Correct.

**Beginning.** श्रीपार्श्वनाथसूरिजिनगुरुभ्यो नमः ।

नमिऊण तिलोयगुरुं लोयालोयपगासयं वीरं ।

सम्बोहसत्तरि सहं रएमि + द्धारगाहाहिं ।

**End.** सम्वेगमनो सर्व्वारूसत्तरि जो परिदृतम्म जिण मिरि जयसेवरवाय, मोलहर नम मंईवो ।

**Colophon.** इति सर्व्वाधसत्तरि सम्पूर्णम् संवत् ॥ १८११ ॥

विषयः । जैनधर्मोपदेशः ।

---

**No. 325.** **सरोजसुन्दर ।** Substance, country-made paper, 12×4 inches. Folia, 18. Lines, 11 on a page. Character, Nāgara. Date, Sam 1849. Place of deposit, Harapurā, Post Gopālagañja, District Chāprā, Paṇḍita Gaṅgā-deo. Appearance, tolerable Generally incorrect.

**Beginning.** श्रीगणेशाय नमः ।

शिवायनो दीनदयापरायणे सति प्रधाने शिनया हतचतिः ।
शिवार्चितोपप्रकटीकृतव्रतोदयाम्बुधिः सर्व्वजनिर्भवलजः ॥ (?)
सरोजसुन्दरं नाम स्मृतिसारमिदं बुधाः ।
सेवयन्तु सदा शान्ताः सर्व्वसन्देहशान्तये ।
क्षौरं तैलं जलं चोष्णं चामिषं निशि भोजनं ।
रतिः स्नानं च मध्याह्ने रवौ सप्त विवर्जयेत् ॥ इत्यादि ।

**End** प्रातःस्नानं चर्विधञ्च ब्रह्मचर्य्यमिदं विषु ।
आग्नेयं भस्मना स्नानं चद्भिर्वारुणमुच्यते ।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतं ॥

**Colophon** इति स्मृतिसारसरोजसुन्दरं समाप्तं ॥ संवत् १८४९ ॥

विषयः । रविवारे तैलादिवर्जनकथनं । जलदानादिकथनं । श्राद्धे वपनादिनिषेधकथनं । द्रव्यशुद्ध्यादिकथनं । कांस्यपात्रे नारिकेलोदकपानादिदोषकथनं । तीर्थस्नानविध्यादिकथनं । दत्तादिपुत्रकथनं । रजःस्वलाशुद्धिकथनं । नवान्नकथनं ॥

---

**No. 326.** **सर्व्वप्रायश्चित्तं ।** Substance, country-made paper, 12×6 inches. Folia, 9. Lines, 16 in a page. Extent, 144 ślokas. Character, Nāgara. Date, Śaka 1696. Place of deposit, Benares, Govinda Bhaṭṭa, Appearance, old. Prose. Incorrect.

**Beginning.** श्रीगणेशाय नमः ।

शुभदिवसे पर्षदं परिकल्प्य कृतस्नानः शुक्लवासा अनशनश्चिवारं पर्षदं प्रदक्षिणीकृत्य समस्तसम्पद्दिति श्लोकचतुष्टयं पठन् साष्टाङ्गं प्रणमेत् पर्षल्लक्षणमाह याज्ञवल्क्यः ।

**End.** ॐ भूर्भुवः स्वः स्वाहा प्रजापतय ॐ अग्नये स्विष्टकृते स्वाहा । अग्नये प्रतपत्रणं करिष्ये, कुरुष्व । प्रपायेन सर्व्वं पिबेत् एतत् पूर्व्वाङ्गं कृत्वा संकल्पानुसारेण प्रायश्चित्तमाचरेत् ।

शके १६९६ जयनामसम्वत्सरे वैशाखशुद्ध ८ तद्दिने महादेवभट्टपट वर्द्धनेन लिखितं स्वार्थं परार्थं वा ।

विषयः । सर्व्वपापानां प्रायश्चित्तविधानं ।

---

**No. 327.** सर्व्वोत्तमटीका By विट्ठलदीक्षित । Substance, country-made paper, 9 × 4 inches. Folia, 43. Lines, 9 on a page. Extent, 688 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, late Babu Hariscandra. Appearance, old. Prose. Correct.

**Beginning.** श्रीकृष्णाय नमः ।

नत्वा पितृपदाम्भोजे मो + कामुष्मिकार्थद ।

तत्श्रीमदाचार्य्यनामानि विवरिष्ये यथामति ॥

यद्यप्ययोग्य एवाहं तन्नामविवृतौ स्वतः ।

स्वीयत्वेनैव कृपया, योग्यतां मयि दास्यति ।

**End.** एतेन आचार्य्याणां शोभाकृतिहेतुलक्षणानायाधिमं नामाङ्कः त्रिलोकी-भूषणमिति । ( इतोनास्ति )

विषयः । सर्व्वोत्तमनामकग्रन्थव्याख्या ।

---

**No. 328.** सहृदयानन्दकाव्यटीका वृधनन्दिनीनाम्नी By रामचन्द्रमिश्र Substance palm-leaf, 14 × 1½ inches. Folia, 238. Lines, 4 on a page. Extent, 3810 slokas. Character, Uriā. Date ? Place of deposit, Puri, Mahiprakāsa Brahmacārī Maṭha, Paṇḍita Valadevaprakāsa Brahmacārī. Appearance, old. Prose. Generally correct.

Beginning of the ṭikā.

पूर्व्वसर्गान्ते मणिविश्लानुसरणं हृष्टेति विसृज्य विष्वक्, नयनद्वय व्यापार्य्य भैमीदिदृक्षुः नलः समीपे भैमीमनवेक्षमाणश्चिन्तानिमग्नोऽभूदित्युक्तं इह उभयोरुभयदिदृक्षापूर्व्वकविरहदुःखमनुभूयोर्वर्णयति इति सर्गयोः सुसम्बन्धितं ।

Beginning of the text.

अथ सा पथि खेदनिःसहा
दमयन्ती चलितुं न चक्षमे ।
प्रियमीक्षितुमिच्छती परं
प्रजिघायाशु दृश दिशो दश ॥ इत्यादि ।

End of the text.

इत्थं निस्तीर्य्य कृत्स्नां विपदमुपगतं स्वं पुरं वैरसेनी
सार्द्धं हृद्यै रमात्यैः प्रणतपदयुगं श्रीमता पुष्करेण ।
निष्प्रत्यूहं प्रजानां मुदमुदयवतीमन्वहं निर्म्मिमाणं
भैमी मान्द्रानुरागोत्तरलितहृदया राजलक्ष्मीश्च भेजे ॥
... ... ... ...
लक्ष्मीर्यावदलङ्करोति हृदयं विष्णोर्य्यमिन्द्राकृते-
र्यावत् विष्णुपदी च धूर्ज्जटिजटाजूटान्तरे क्रीडति ।
कृष्णानन्दकवेः कपिञ्जलकुलक्षीरोदशीतद्युते-
स्तावत् काव्यमिदं तनोतु कृतिनामन्तःप्रमोदोदयं ॥

End of the ṭikā.

हरजटाजूटस्थायिन्या गङ्गायाः क्रीडनं यथा नित्यं तथा एतत्काव्यस्य सर्व्वदा वर्त्तमानस्य कृतिचित्तप्रमोदविस्तारकत्वं नित्य भवतु ।

The Colophon of the text.

• इति श्रीसान्धिविग्रहिकसकलकविकुलमौलिमण्डनश्रीकृष्णानन्दकृतसहृदयानन्दे महाकाव्ये नैषधन्द्रस्य द्वितीयसाम्राज्यलाभो नाम पञ्चदशः सर्गः समाप्तः ।

The Colophon of the ṭikā.

कौत्सस्यगोत्राज्जातान्मृत्युञ्जयमिश्रमेदिनीदेवात् ।
श्रीरामचन्द्रमिश्रैर्व्याख्यातः पञ्चदशः सर्गः ॥
इति श्रीमृत्युञ्जयमिश्रसूनुविरचितायां सहृदयानन्दटीकायां बुधनन्दिन्यां पञ्चदशः सर्गः समाप्तः ।

---

**No. 329.** सांहित्यपनिषद्भाष्यं शिक्षाभाष्यम् । Substance, country-made paper, 12×5 inches. Folia, 92. Lines, 9 on a page. Extent, 1,656 slokas. Character, Nāgara. Date, Saṃ 1661. Place of deposit, Benares, Govinda Bhaṭṭa. Appearance, old. Prose. Correct.

**Beginning.** वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ॥ १ ॥

**End.** निष्प्रत्नेऽपि साधनानुष्ठाने कृतप्रत्नदोषेण फलं प्रतिबध्येत तस्माभूत् इत्याध्यात्मिकादिविघ्नानां शान्तिर्निस्प्रत्नेत्येवं देवकृत उपकारः परामृश्यते ।

**Colophon** वेदार्थस्य प्रकाशेन तमो हार्दं निरासयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
इति श्रीसायनाचार्य्येण विरचिते वेदार्थप्रकाशे यजुरारण्यके सांहित्यामुपनिषदि द्वादशोनुवाकः । समाप्ता सांहित्युपनिषत्, शिक्षाभाष्य समाप्तं । संवत १६६१

विषयः । यजुरारण्यकान्तर्गतसांहित्युपनिषद्व्याख्या ।

---

**No. 330.** मादस्यतत्त्वदीप By वासुदेव । Substance, country-made paper, 12×6 inches. Folia, 17. Lines, 13 on a page. Extent, 510 slokas. Character, Nāgara. Date ? Place of deposit, Benares, Vāmanācārya. Appearance, old. Prose Correct

**Beginning.** श्रीश्रीपतिपितॄन् नत्वाग्रजश्रीमाधवान् गुरून् ।
मादस्यतत्त्वदीपोऽयं वासुदेवेन तन्यते ॥
मादस्यस्य च चार्षेयान् पुरोनूचामात्विजो वृणीत ।

**End.** प्रक्षेपात् किञ्चिदुद्धारात् स्वनामलिखनादपि ।
श्रेयोर्थिभिर्न कर्त्तव्यावान्यथा कृतिरीदृशी ॥

**Colophon.** इति श्रीश्रीपतिसुतवासुदेवविरचितः मादस्यतत्त्वदीपः समाप्तः ।

विषयः । मादस्यप्रयोगविधिः ।

---

**No. 331.** साधारणपदार्थतत्त्वदीपनं By वासुदेव । Substance, country-made paper, 12×5 inches. Folia, 19. Lines, 19 on a page. Extent, 856 slokas. Character, Nāgara. Date ? Place of deposit, Benares, Paṇḍita Vāmanācārya. Appearance, old. Prose. Correct.

Beginning. द्विवेदश्रीश्रीपतिज्ञो वासुदेवो नतः शिवौ ।
साधारणं पदार्थानां अतनोत् तत्त्वदीपनं ॥
तत्र प्रथमतः पदार्थानां ऋत्विक्प्रयोज्यत्वात् ऋत्विक्लक्षणमुच्यते ।

End क्रियते मनसान्यासा या वाचा संस्क्रियते तामस्य ऋत्विजः संस्कुर्वन्ति ।

विषयः । श्रौतकर्मणां बहूच्पदार्थविचारः ॥

---

No. 332. सामान्यप्रक्रिया By वसुप्रहराज । Substance, palm-leaf, 9 × 1½ inches Folia, 138. Lines, 5 on a page. Extent, 2800 slokas. Character, Uriā. Date ? Place of deposit, Purī, Paṇḍita Madhusūdana Misra Appearance, old. Prose. Generally correct.

Beginning श्रीगणेशाय नमः । अविघ्नमस्तु ।
नारायणं नमस्कृत्य करुणावरुणालयं ।
क्रियते बालबोधाय सामान्यप्रक्रिया मया ॥
अ इ उ ण ऋ लृ क । ए ओ ङ ऐ औ च । ह य व र ट् । ल ण् ।
ञ म ङ ण न । झ भ ञ । घ ढ ध ष । ज ब ग ड द श ।
ख फ छ ठ थ । च ट त व् । क प य् । श ष स र् । ह ल् ।
इति प्रत्याहारसूत्राणि । हलन्त्यं । उपदेशेऽन्त्यं हलित् स्यात् ॥ इत्यादि ।

End. एकैकमक्षरं बहुशोद्योवद्भावेऽपि स्मइत्यादिकमिष्यते एकैकस्मै देहि ।
सम्भ्रमेण प्रवृत्तो यथेष्टमनेकधा प्रयोगोऽन्यायसिद्धः । इति द्विरुक्तिप्रक्रिया ।
समाप्तोऽयं ग्रन्थः ।

विषयः । संज्ञासन्धिशब्दटणलकारतिङन्तकृदन्तप्रत्ययकारकविभक्तिसमासतद्धितद्विरुक्ति-प्रक्रियात्मकं व्याकरणं । सन्धिशब्दान्तर्गतमेव षत्वणत्वप्रकरणं । श्रूयते यदेतद्ग्रन्थप्रणेता वसुप्रहराजः वसुप्रक्रियेत्यपरनामकः गङ्गामान्तर्गतभराकोशग्रामवास्तव्य आसीदिति ।

---

No. 333. सामायकटीकावार्त्तिकम् । Substance, country-made paper, 15 × 7 inches Folia, 21 Lines, 24 on a page. Extent, 1890 slokas Character, Nāgarī. Date ? Place of deposit, Dinmaṇḍalācārya Mahārāja Bālacandra Sūri, Benares City. Appearance, fresh Prose. Correct

**Beginning.** श्रीवीतरागाय नमः ।

अथ सामायकटीकावार्त्तिकं लिख्यते ।

परिक्रमामि भन्ते इरिया वहियाए विरहणाए अणागुते थर गमणे निगमणे ठाणगमणे चक्रमणे पाणगमणे विज्जुगमणे हरिदुगमणे इत्यादि ।

**End.** जिनेश्वरदेवका अगुणके केवलदर्शनकेवलज्ञानम् ति किम्रारे प्राप्ति होय ।

**Colophon.** इति श्रीशास्त्रानुसारर्धानाग्नतं भव्यानां मुक्तिदं सामायिकं सर्व्वकर्मक्षयार्थं शास्त्रमङ्गलमस्तु ।

विषयः । जैनानां सर्व्वपापक्षयकारककर्म्मोपदेशः ।

---

**No 334.** सामुद्रकं । Substance, country-made paper, 12×4 inches. Folia, 4. Lines, 7 on a page. Extent, 120 slokas. Character, Bengali. Date ? Place of deposit, Zilla Mayamansing, Parganā Atiya; Post Jāmurki, Grāma Hālāliyā, Paṇḍita Gurudāsa Vidyāratna. Appearance, fresh. Verse. Correct.

**Beginning.** ॐ नमो गणेशाय ।

आदिदेवं प्रणम्यादौ सर्व्वज्ञं सर्व्वदर्शिनं ।
सामुद्रकं प्रवक्ष्यामि सौभाग्यं पुरुषस्त्रियोः ॥
कीदृशः पुरुषो रम्यो निन्द्यो वापि कथं भवेत् ।
कन्या वा कीदृशी रम्या गर्हिता वापि कीदृशी ॥
नारद उवाच ।
शृणु कृष्ण प्रवक्ष्यामि सामुद्रेण यथोदितं ॥ इत्यादि ।

**End** यथा कण्ठौ तथापादौ वाऊजङ्घे तथैव च ।
एवं सुलक्षणयुता कन्या लक्ष्मीस्वरूपिणी ॥
भाग्येनैव लोकेस्मिन् लभते च तथाविधां ॥
उभयोर्लक्षणं प्रोक्तं नारीपुरुषयोरपि ।
शुभाशुभानि कार्य्याणि लक्षणानि तथैव च ॥

**Colophon.** इति सामुद्रकं समाप्तं ॥

विषयः । लक्षणद्वारेण स्त्रीपुरुषयोर्भाग्यनिरूपणं ॥

---

**No. 335.** **सायंप्रातर्होमप्रयोगः ।** Substance, country-made paper, 9 × 5 inches. Folia, 5. Lines, 8 on a page. Extent, 70 ślokas. Character, Nāgara. Date ? . Place of deposit, Late Babu Hariścandra, Benares City. Appearance, old. Prose. Correct.

**Beginning.** श्रीगणेशाय नमः ।

देशकालौ स्मृत्वा सायमग्निहोत्रं पयसा होष्यति. प्रातरग्निहोत्रमिति प्रातः गार्हपत्यं प्रज्वाल्य दक्षिणाग्निमानीय उद्धराहवनीयं. देवं त्वादेवेभ्यः श्रिया-उद्धारयामि .

**End.** हरिणीं त्वा सूर्य्यज्योतिषमह + + + कामुपदधे तेन पूर्व्ववत् + + + ज्ञातं स्वग्ने + + + इत्यादि विष्णुस्मरणान्त समापनम् .

**Colophon.** इति सायंप्रातर्होमप्रयोगः .

**विषयः ।** सायं प्रातर्होमविधिकथनम् .

---

**No. 336.** **सारसंग्रहः** By **विश्वनाथ ।** Substance, palm-leaf, 15 × 1½ inches. Folia, 169. Lines, 4 on a page. Extent, 2000 ślokas. Character, Nāgara. Date ? Place of deposit, Purī, Rājagopāla Maṭha, Mohanta Śrī Raghunandana Rāmānuja Dāsa. Appearance, fresh. Generally in verse. Incorrect.

**Beginning.** श्रीगणेशाय नमः ।

यस्यार्कचन्द्रदहना नयनानि वातं
पित्तं कफञ्च शमयत्यवलोकनेन ।
लोकत्रयीजननपाल[न]नाशहेतुः
कुर्याच्छुभं त्रिनयनः स सदा नराणां ॥
× × × × ।
प्रयोगास्तैर्विश्वनाथः कुरुते सारसंग्रहं ॥
दोषाः प्रकृतयो वह्निदुष्टाः सात्म्यवनं वयः । (?)
देशकालौ तथा साम्यमाहारो भेषजानि च ॥
एतानि सर्व्वदा नित्यं × × × × ॥ (?) इत्यादि ।

**End.** गा × कफे पित्ते चूर्णं मात्रा च मर्द्दितं । मारावचूर्णं ।
लशुनं सुरपापीतं गुल्मो × × × ।
क्षौद्रं पक्वं घनीभूतं त्रिकुसैन्धवसंयुतं ॥ (अत परं खण्डितं)

विषयः । गन्धकशुद्धि-रसशुद्धि-लौहादिधातुगुणादि-कल्पतरुरस-वातारिघृत-महाकाग-वाग्घृत-नाराचचूर्णादिनानाविधभेषजविषयकवचनानि ।

---

**No. 337.** सारस्वतभाष्यटीका (पदचन्द्रिका) By गोविन्दाचार्य्य । Substance, country-made paper, 14 × 4 inches. Folia, 169. Lines, 5 on a page. Extent, 1700 slokas. Character, Bengali. Date, Śaka 1707. Place of deposit, Elanga *viâ* Tangail, Babu Nilakamala Bhaṭṭāchāryya, Zemindar. Appearance, old. Prose. Generally correct.

**Beginning.** ॐ नमः सरस्वत्यै ।

धातोः । 'धातोरित्यधिकृतं वेदितव्यं । अतऊर्द्धं ये वक्ष्यन्ते ते प्रत्यया धातोः परे भवन्ति' । भवति भवतः भवन्ति । कर्त्ता कर्त्तारौ कर्त्तार इति । धातोरिति प्रथमान्तानुकरणं पञ्चम्यन्तं पदं अतऊर्द्धं अतः पश्चात् ये प्रत्यया वक्ष्यन्ते ते धातोः परे भवन्तीत्यर्थः । उक्तञ्च "अत ऊर्द्ध्वं भवेत् सूत्रे द्वादशाहो विधीयते" इति ॥ इत्यादि ।

**End.** इङ् अध्ययने अस्य सौ परे वा गौः अध्यगीष्ट पक्षे अध्यैष्ट दिवा-द्यावट्स्वरादेश अजगतौ अस्य वीः गुणः × × ॥

**Colophon.** इति श्रीगोविन्दाचार्य्य-विरचितायां सारस्वतभाष्यटीकायां पदचन्द्रिका-याभाख्यातेऽष्टमः पादः समाप्तः । श्रीहरिः । शकाब्दाः १७०७ ।

विषयः । सारस्वतभाष्यस्य स्फुटीकरणम् ॥

---

**No. 338.** साहित्यदर्पणालोचनम् । Substance, palm-leaf, 12 × 2 inches. Folia, 143. Lines, 5 on a page. Extent, 2860 slokas. Character, Uriā. Date ? Place of deposit, District Purī, pargana Rāhan, grāma Jagannātha Vidyādharapura, Paṇḍita Rāmcandra Miśra. Appearance, tolerable. Generally in prose. Correct.

**Beginning.** प्रणमामि परां देवीं मूलाधारधृतोदयां ।
यद्विवर्त्तमिमं कृत्स्नं प्रपञ्चं परिचक्षते ॥
आसीत् कपिञ्जलकुलक्षीराकूपारचन्द्रमाः ।
विकलिङ्गाधिकधराधामधीसचिवः कृती ॥
अशेषभाषारमणीभुजङ्गः साहित्यविद्यार्णवकर्णधारः ।

ध्वन्यध्वनिप्रौढ़धियां पुरोगः श्रीविश्वनाथः कविचक्रवर्त्ती ॥
स्वल्पाक्षरः सुबोधार्थः प्रध्वस्ताशेषदूषणः ।
साहित्यदर्पणो नाम ग्रन्थस्तेन विनिर्म्मितः ॥
पारं साहित्यविद्याब्धेर्गन्तुं वाञ्छन्ति ये क्षितौ ।
कृतिरेषा तरिस्तेषां विश्वनाथमहाकवेः ॥
अथाभिधेयालङ्कारतत्त्वं सत्कविसम्मतं ।
यदीहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥
अस्य सत्कविवागगुम्फजीवातोः कृतिनां मुदे ॥
मया विधीयते टीका दुर्ब्बोधार्थविबोधिनी ॥ इत्यादि ॥

End. एतयोः कुलकादिवन्यवाङ्मयादीर्घसमासरचना विवध्यते ।
इति साहित्यदर्पणलोचने नवमः परिच्छेदः ।
द्वितीया चेदतिशयोक्तिरस्तु किमलङ्कारान्तरकल्पनया
अतः परं खण्डितं ।

विषयः । साहित्यदर्पणस्य व्याख्यानं ।

---

**No. 339** साहित्यदर्पणटीका (प्रभास्फूर्त्तिनाम्नी) By लोकनाथदीक्षित. Substance, palm-leaf, 15×1 inches. Folia, 88 Lines, 7 on a page. Extent, 1850 slokas. Character, Uriā. Date ? Place of deposit, Dāmodarapura Śāsan, Zilla Purī, Paṇḍita Sadāsiva Kāvyakaṇṭha. Appearance, old. Prose. Correct.

**Beginning** श्रीगणेशाय नमः ।
व्रजजनवनितानां केलि कौतूहलं यो
युगपदनुबभूवुर्निर्म्मितानेककायः ।
श्रितजनभवदुःखच्छेदमानन्ददायी
स मम भवतु भूत्यै क्षीरपाथोधिशायी ॥
श्रीगोपीनाथगुरुभिर्निर्म्मितां दर्पणप्रभां ।
आलोच्य लोकनाथेन प्रभास्फूर्त्तिर्विरच्यते ॥
ग्रन्थ इति । रचनाविशेषविशिष्टं वाक्यजातं ग्रन्थः । आरम्भः प्रथम-
प्रवृत्तिः ग्रन्थारम्भोपलक्षितः काल इत्यर्थः । इत्यादि ।

End. तर्क्क अनारोपितं रूपं सुखं अनायासेन श्रीः लक्ष्मीः प्रथितः प्रख्यातः ।
शास्त्रार्थश्चाखिलकरकृतौ निर्विशेषा + + + ।
मत्वा नत्वा प्रतिदिनमयं याचते लोकनाथः
गोपीनाथप्रविचितदिशा जायमाने मदीये
ग्रन्थे दोषोदरपरचिकं मानसं स्यात् शुभं वः ॥

Colophon. इति श्रीलोकनाथदीक्षितकृतौ साहित्यदर्पणप्रभाख्यायां दशमः परिच्छेदः ।
समाप्तोऽयं ग्रन्थः ।

विषयः । साहित्यदर्पणस्य व्याख्यानं ।

---

**No. 340. साहित्यरत्नाकरटीका** By **कृष्णमिश्र ।** Substance, palm-leaf, 12×2 inches. Folia, 112. Lines, 9 on a page. Extent, 6048 slokas. Character, Uriā. Date ? Place of deposit, District Purī, pargana Rāhan, grāma Jagannātha Vidyādharapura, Paṇḍita Rāmacandra Miśra. Appearance, tolerable. Prose and verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः । अविघ्नमस्तु ।
नानाशास्त्रविशारदो द्विजवरो यो रामनामा महान्
यस्मा कौत्सकुलावलीहिमकरः प्रादुर्भवत्युत्कले ।
कृष्णस्तनयात्मजः कविसुधीः साहित्यरत्नाकर-
स्यालङ्कारसुधाकराख्यमतुलं व्याख्यानमाख्यात्यसौ ॥
विघ्नध्वंसपूर्व्वकसमाप्तित्वावच्छिन्नं प्रति विघ्नध्वंसमात्रं प्रति वा मङ्गलस्य हेतुतायाः सिद्धत्वात् ग्रन्थादौ शिष्यशिक्षार्थं तदुपनिबध्नाति + +
+ + + आशिरिदित्यादि इत्यादि ।

End एवमन्येऽपि शब्दालङ्कारा इति दिक् ।

Colophon. इति श्रीकौत्सकुलतिलकमहामहोपाध्यायकृष्णमिश्रकृतायामलङ्कारसुधाकर समाख्यायां साहित्यरत्नाकरटीकायां शब्दालङ्कारनिरूपणा षष्ठी कौमुदी.

विषयः । साहित्यरत्नाकरस्य व्याख्यानं ।

---

**No. 341.** प्रौढमनोरमाटीका *By* हरिदीक्षित । Substance, country-made paper, 10 × 4 inches. Folia, 540. Lines, 10 on a page. Extent, 16,200 ślokas. Character, Nāgara. Date ? Place of deposit, Pātna City, Sanskrit-sañjivani, Paṇḍita Jayanārāyaṇa Bājpeyī. Appearance, old. Prose. Incorrect.

**Beginning.** श्रीगणेशाय नमः ।

शेषविभूषणमीड़ं शेषाशेषार्थलाभाय ।

दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥ इत्यादि ।

**End.** एतेन द्वन्द्वे चेत्यस्य समुदायसर्व्वनामसंज्ञानिषेधकत्वं प्रथमानिर्द्देशेनैव उपपत्तौ सप्तमीनिर्द्देशो + + + मन्दोक्तमपास्तं ॥

**Colophon.** इति श्रीभट्टोजिदीक्षितपौत्रेण वीरेश्वरदीक्षितसूनुना हरिदीक्षितेन कृते शब्दरत्ने सुबन्तपादः समाप्तः ।

विषयः । भट्टोजिदीक्षितकृतप्रौढमनोरमायाः सिद्धान्तकौमुदीटीकाया व्याख्यानं ।

---

**No. 342.** सिद्धान्तरत्नावली ( खण्डित ) By अग्निचिद्दत्तभद्दमिश्र । Substance, Tedetpatra, $14\frac{1}{2} \times 1\frac{1}{2}$ inches. Folia, 53. Lines, 4 on a page. Extent, 543 ślokas. Character, Bengali. Date ? Place of deposit, Purī, Sāṅkara Maṭha. Appearance, old. Prose. Generally correct

**Beginning.** गणपतये नमः ।

क्षौणीबुद्धिगतः प्रदक्षिणपथं कृत्वा समातुर्मुदा

गौर्य्यां मोदकभक्षणांक परतद्रत्नावलीं यो दधे । (?)

+ + + + +

+ + + + +

नन्दीनन्दनतां स्वपङ्कजपदे भक्ता च भक्तायते

बालो बालसभाजनेन विधिना प्रागाम् महाकालतां ।

दृश्येते मदनद्विषः + + + + +

श्यामीलगलः फणीन्द्रवलयो देवो बहुगौरीपतिः ॥

यो रामो हलमस्तके निक्षितधाम् येषं कुरूणां प्रभु-

र्यः कृत्वो गिरिराजमन्दरगिरिं वामेन + + + + ।

+ + + निधाय शिरसि प्रारभ्यतेऽधुना
सन्देहाकुल + + मोक्षजननीं सिद्धान्तरत्नावलीं ॥

ननु प्रत्यक्चैतन्यमात्राश्रिता विद्याविषयकताद्दया + + + + + + ऽकारणमिति ते मतं तत्र च नाविद्याजीवाश्रया + + + इति प्रतीतेः इति चेदित्यादि ।

**End** तत्र श्रवणादीनां सकृदनुष्ठानमात्रेण किमर्थं फलं न सम्भवतीति न वक्तव्यं यावता फलोत्पत्तिस्तावदनुष्ठानं कर्त्तव्यं यथाप्रीहीनवघ्नन्यादित्यत्र दृष्टफलस्य तण्डुलनिष्पत्तेः सकृदनुष्ठानेनासम्भवात् पुनः पुनरावृत्तिं क्रियते तद्वत् ।

**Colophon.** इति श्रीमत्परमहंसपरिव्राजकाचार्य्य-श्रीमदनुभवानन्दपूज्यपादशिष्येनाग्निचिद् बलभद्रमिश्रेण विरचितायां सिद्धान्तरत्नावल्यां साधननिरूपणं नाम तृतीयोऽध्यायः ।

विषयः । समन्वयनिरूपणं नाम प्रथमोऽध्यायः ।
अविरोधनिरूपणं नाम द्वितीयोऽध्यायः ।
साधननिरूपणं नाम तृतीयोऽध्यायः ।

---

**No. 343.** सुन्दरीरत्नावली or सौन्दर्य्यरत्नावली । Substance, country-made paper, 8×3 inches. Folia, 64. Lines, 6 on a page. Extent, 750 ślokas. Date ? Place of deposit, Sākrāil, *viâ* Tangail, Babu Bijaya Simha Dāsagupta Appearance, old. Verse. Generally correct.

**Beginning.** नमः परमदेवतायै ।
एकदा मन्त्रवर्णांश्च वटपत्रे विलिख्य च ।
त्यक्त्वा च जाह्नवीतीरे प्रयागे निजमन्दिरं ॥
ददर्श वटमूले च एकां रामां मनोहरां ।
का त्वं बाले तरोर्मूले मिलिता मम भाग्यतः ।
आलिङ्गनेन हृदयानन्दं जनय भाविनि ॥
देव्युवाच । तिष्ठ तिष्ठेति हे मूढ़ स्थिरचित्तं कुरुष्व ते ।
किमर्थं त्यक्तमन्त्रस्त्वं मद्वदस्व सद्यतः ॥

शिष्यश्चवाच । सम्यगनुष्ठितो मन्त्रः शिवोक्तविधिना मया ।
पुरश्चर्य्याशतं कृत्वा न च किञ्चित्फलोदयः ॥
शरीरञ्च यतो नष्टं विरक्तो ह्यन्यसाधने ।
अतोऽहं त्यक्तमन्त्रोऽपि का त्वं मे वद सुन्दरि ॥
इति श्रुत्वा शिष्योर्वाक्यं जननी सुदयावती ।
सत्यं कृत्वा शिष्यौ प्राह ईषद्धास्ययुता सती ।
इष्टाहं तव-मूढात्मा बद्धाहं तव कर्म्मणा ॥ इत्यादि ॥

End. अहं वेद्मि समग्रेण मानवोऽपि कश्चित् क्वचित् ।
अस्त्यसंसर्गिणः पुण्यास्तरिष्यन्ति कलौ युगे ॥

Colophon. इति श्रीसुन्दरीरत्नावल्यां जगन्मातृद्रविड़शिष्य-संवादे शरत्कृत्यवर्णो नाम पञ्चमः पटलः ॥

विषयः । जगन्माता द्रविड़शिष्ये साधनस्योपदेशप्रदानं, तत्र शरदि देवीपूजनेन सिद्धिर्भविष्यतीतिकथनं, शरत्कालीनदेवीपूजनस्य विधिकथनपूर्व्वकं जपमन्त्रक्रमादिनिरूपणं ।

---

**No. 344. सुवेरप्रश्नः ।** Substance, country-made paper, 8½ × 4 inches. Folia, 14. Lines, 9 on a page. Extent, 196 slokas. Character, Nāgara. Date, Saṃ. 1823. Place of deposit, Purī, Śankara Maṭha, Madhusūdana Tīrthasvāmī. Appearance, old. Verse and prose. Generally correct.

Beginning. श्रीगणेशाय नमः ।
अवयदेत्यादिके वर्णैश्चतुर्भिर्भाषितः पुरा ।
सरस्वत्या सुवेरप्रश्नोऽभीष्टज्ञापकः सदा ॥

अ व य द इत्यक्षरचतुष्टयं पाशिकापार्श्वे लिखितं सरस्वत्याः पूजनं देवतामन्त्रेण पाशकं सप्ताभिमन्त्रितं कार्य्यं क्षिपनीयं जपति मन्त्रं । ॐ त्रिपुरसि × × × × × स्वाहा । अ अ अ भोः पृच्छक शृणु तव कुशलमेकजगदीश्वरस्य शत्रुवर्द्धनं जगदीशवलेन शत्रुक्षयो भविष्यति तव एतत्कार्य्यमपरं च सर्व्वं सिध्यति व्यापारादि सर्व्वं कार्य्यं हस्ते आगमिष्यति तत्र सन्देहो नास्ति । इत्यादि ॥

**End.** द् व च भो प्रश्नक श्रृणु। त्वया चिन्तितं कार्य्यं समुपेक्षितं कष्टसाध्यं तव गणवः परोक्षेऽपवादं कथयन्ति मयदनिष्टं जातं त्वं कुत्रापि गमनं वाञ्छसि तत्र गते सति किञ्चिच्छुभं किञ्चिदशुभमधुना तव मध्यानुद्वेगो वर्त्तते इष्टदेवतायाः पूजां कुरु तेन शुभं कल्याणं भविष्यति।

**Colophon** इति श्रीमद्भावद्राजापितं (?) सरस्वत्या प्रोक्तः कुवेरप्रश्नः समाप्तः॥

मार्गे चतुर्दशदिने ऽसितपक्षयुक्ते
रामद्विनागशशिवत्सर इन्दुवारे।
पुस्तं व्यलेखि प्रथमाश्रमधर्म्मपारो-
वाच्याप्रसिद्धगिरिधार्य्यशमद्भुतं वै॥

विषयः। शुभाशुभजिज्ञासोरवयदैतिवर्णचतुष्टयस्याहत्विविशेषेण शुभाशुभविवेचनमित्यनुमीयते॥

---

**No. 345.** सूर्य्यपूजापद्धतिः। Substance, country-made paper, 13×3 inches. Folia, 4. Lines, 8 on a page. Extent, 80 ślokās. Character, Bengali. Date ? Place of deposit, Zilla Medinīpura, Post Gaḍavetā, grāma Khunveḍā, Babu Baikunṭhnātha Cakravarti. Appearance, tolerable. Prose. Correct.

**Beginning.** ॐ नमः सूर्य्याय।

अथ सूर्य्यव्रतं।

कृतनित्यक्रियो यजमानः प्राङ्मुख आचम्य विष्णुं स्मृत्वा आसनशुद्ध्यादिकं विधाय गन्धपुष्पादिना गुरुं विष्णुं नत्वा पश्चात् ब्राह्मणांश्च सम्पूज्य स्वस्तिवाचनपूर्व्वक संकल्प कुर्य्यात्। यथा कुशतिलफलसहितजलपूर्णताम्रादिपात्रं गृहीत्वा तत्र गन्धपुष्पादिकं दत्वा ॐ सूर्य्यः सोम इति पठित्वाॐ गङ्गेचेत्यादिना तीर्थमावाह्य ॐ तत्सदित्युच्चार्य्य अद्यामुकमास्यमुकपक्षे अमुकगोत्रः श्री अमुकदेवशर्म्मा ऐहिकारोग्यधनधान्यपारलौकिकोत्तमस्थानप्राप्तिकामः सूर्य्यव्रतमहं करिष्ये इति संकल्प्य। इत्यादि।

**End.** आदित्य भास्कर रवे भानो सूर्य्य दिवाकर।

प्रभाकर नमस्तेऽस्तु सर्व्वान् पापान् विमोचय॥

इति मन्त्रेणादित्यं विश्वरूपं विभाव्य पुष्पाञ्जलिं दत्वा प्रणमेत्। ततो-यथाशक्ति मन्त्रं जप्त्वा अर्घ्योदकेन जपं समर्प्य कथां श्रुत्वा दक्षिणां दत्वा

अच्छिद्रवाचनं कृत्वा चमस्व इत्यनेन विसर्ज्जयेत् । निर्म्माल्यमचणं शिरसि न कुर्य्यात् । मदर्पितनिर्म्माल्यं शरीरे न तु धारयेदिति वचनात् ॥

**Colophon.** इति सूर्य्यपूजापद्धतिः समाप्ता ॥

विषयः । सूर्य्यस्य पूजाविधिकथनं ।

---

**No. 346.** सूर्य्यव्रतं । Substance, country-made paper, $13\frac{1}{2} \times 3$ inches. Folia, 11. Lines, 6 on a page. Extent, 176 slokas. Character, Bengali. Date ? Place of deposit, Zilla Medinīpur, Post Gaḍvetā, grāma Khunveḍā, Babu Vaikuṇṭhanātha Cakravarti. Appearance, fresh. Verse Correct.

**Beginning.** ॐ सीतारामाभ्यां नमः । अथ सूर्य्यव्रतकथा ।

उदयगिरिमुपेतं भास्करं पद्महस्तं
निखिलभुवननेत्रं रत्नरत्नोपमेयं ।
तिमिरकरिमृगेन्द्रं बोधकं पद्मिनीनां
सुरवरमभिवन्दे सुन्दरं विश्वदीपं ॥

ऋषय ऊचुः ।

कथितं भवता सर्व्वं सूत तत्त्वार्थकोविद ।
धर्म्माश्च बहुधा प्रोक्ता व्रतानि बहुविस्तरं ॥
इदानीं श्रोतुमिच्छामः सूर्य्यव्रतकथां शुभां ।
कृपया परयाविष्टो यथावद्वक्तुमर्हसि ॥ इत्यादि ।

श्रीसूत उवाच ।

**End.** एतद्गुह्यतमाख्यानमाख्यानं पुण्यदं शुभं ।
जन्ममृत्युजराव्याधि यदभ्यासान्न जायते ॥
सर्व्वं पातकिनं दृष्ट्वा यत्पापं लभते नरः ।
आख्यानश्रवणेनैव भस्मीभूतं भविष्यति ॥

**Colophon.** इति श्रीआदित्यसंहितायां ऋषिगणप्रपञ्चे श्रीकृष्णार्जुनसम्वादे सूर्य्यव्रतं सम्पूर्णं ॥ ॐ सूर्य्याय नमः ।

या कौलिच्युतकोमलेन्नविषमां शय्यां न सेहे पुरा
या यानान्तरसंगतार्ककिरणद्योतादपि म्लायति ।

सेयं निठुरकाछसञ्चितचितां स्वत्पतकराणाममां
संराख्या मचमा प्रियस्य भजते स्वेचस्य किं दुष्करं ॥

विषयः। श्रीकृष्णात् अर्ज्जुनस्य सूर्य्यग्रहस्य फलादिश्रवणं।

---

**No. 347.** स्कान्दगीता। Substance, country-made paper, 13 × 5 inches Folia, 35. Lines, 9 on a page. Extent, 630 slokas. Character, Nāgara. Date, Saṃvat 1905. Place of deposit, Benares City, late Babu Hariscandra. Appearance, new. Verse Correct

**Beginning.** नारद उवाच।

कार्त्तिकेय महाबाहो शिवस्य गिरिजापतेः

पूजनस्य विधिं ब्रूहि येन शम्भुः प्रसीदति। स्कन्द उवाच।

**End.** आश्रमा त्वां गमिष्येऽहं नरनारायणाश्रमं

आमुञ्च त्वं सदा तात सुखं विष्णुप्रसादतः।

**Colophon.** इति श्रीस्कन्दगीतासूपनिषत्सु ब्रह्मविद्यायां स्कन्दनारदसंवादे दशमो ध्यायः समाप्तः शुभमस्तु। सम्वत् १९०५।

विषयः। प्रथमतः शिवपूजाफलकथनं ततः ब्रह्मविद्याकथन।

---

**No 348** स्तम्भनकपार्श्वनाथचरित्रम् By अभयदेव। Substance, country-made paper, 14 × 5 inches. Folia, 7 Lines, 5 on a page Extent, 70 slokas. Character, Nāgarī Date ? Place of deposit, Benares City, Digmaṇḍalācārya Mahārāja Vālacandra Sūri. Appearance, new Prose Correct.

**Beginning.** जय तिहुयणवरकप्परुक्ख जय जिनधन्नन्तरी,

जय तिहुयणकल्लाणकोस दुरियक्करिकेसरि।

तिहुयणजणअविलंघियाण भुवनत्तयसामिय,

कुणसुसुहाइ जिनेस पास थम्भणय पुर द्विय॥

**End.** मुणिवरसिरि अभयदेव विणवइ अनिन्दिय।

**Colophon.** इति श्रीस्तम्भनकपार्श्वनाथचरित्रम्।

विषयः। अभयदेवसूरिविरचितपार्श्वनाथस्तोत्रं।

---

**No. 349.** स्नानचन्द्रिका By अनन्तदेव। Substance, country-made paper, 12 × 5 inches. Folia, 9. Lines, 10 on a page. Extent, 200 ślokas Character, Nāgara. Date, Samvat 1876. Place of deposit, Benares City, late Babu Hariścandra Appearance, new Prose. Correct.

**Beginning.** श्रीगणेशाय नमः।

यस्मिन् प्रसन्ने किलनिर्गुणोऽपि वचो विकाशं लभतेऽचिरेण।
तज्ज्ञानरूपं गिरिजार्द्धदेहं शिवं शिवायै च नमामि नित्यम्।

**End** अनन्तविबुधार्य्येण श्रीमदुद्धवसूनुना।
योऽव श्रमः कृतस्तेन प्रीयतां गिरिजापतिः॥
इति श्रीमद्द्विवेदिउद्धवात्मज द्विवेदिअनन्तदेवविरचितायां स्नानसूत्र-
पद्धतौ तृतीयकण्डिकापद्धतिः।

**Colophon.** इति श्रापदवाक्यप्रमाणज्ञश्रीमद्द्विवेदि-उद्धवात्मजद्विवेदि-अनन्तदेवविर
चिता स्नानचन्द्रिकापद्धतिः समाप्ता।

विषयः। स्नानादिविचार।

---

**No. 350.** स्नानविधिः By श्रीदेव। Substance, country-made paper, 11 × 6 inches. Folia, 33. Lines, 14 on a page. Extent, 858 ślokas. Character, Nagāra. Date, Samvat 1801 Place of deposit, Benares City, late Babu Hariścandra Appearance, new. Prose Correct

श्रीगणेशाय नमः।

**Beginning** अथ नित्यस्नानस्येतिकर्त्तव्यता लिख्यते। तत्र + + + विभक्तस्य
दिवसस्य चतुर्थे भागे मृद्गोमयकुशतिलाक्षतदूर्वापामार्गपुष्पवस्त्रयुग्म
+ + + पात्रादीनि स्नानोपकरणान्यादाय नदीदेवखाततडागादुद-
काश्रयं गत्वा शुचौ तट प्रक्षाल्य मृद्गोमयादीनि पृथक् पृथक् स्थापयेत्।

**End.** तदृणक्तौ तन्नामधेयं मन्त्रैर्नमस्कारान्तं पूजनं, अथवा वेदाद्युक्तदीक्षानु-
सारेण देवतार्चनं कुर्य्यात्। इति देवार्चनम्।

**Colophon.** अग्निचित्-सम्राट-स्थपति-महायाज्ञिक-श्रीदेवकृत. स्नानविधिः। सवत्
१८०१।

विषयः। वैदिकस्नानादिविधिः।

**No. 351** **स्वयम्भूदेवचरित्रम्** । Substance, country-made paper, 9 x 12 inches. Folia, 15 Lines, 23 on a page. Character, Nagāra. Date, Saṃvat 1940. Place of deposit, Kailādeva Maṭha, Hātuā. District Chāprā. Appearance, new. Verse. Generally incorrect.

**Beginning.** श्रीमते मङ्गलमूर्त्तये नियमानन्दाय नमः ॥

सर्वोऽज्ञः सनकादिभिर्मुनिवरैर्योगम्य सूक्ष्मां गतिं
चेतस्याविशते गुणेषु च गुणाभेदः + + + + +
भिन्नाभिन्नमतं विधाय च शुभं ज्ञानं स्वभक्तोत्तरं
धर्म्मं भागवतं सर्व्वं वसुशशिसंख्यास शिष्याः कृता
ज्ञान नैष्ठिकसम्प्रदायानुमतं स्वात्मीकृतिष्टाभिध
तापानां शमनात सत्वतरमनाहं ? मम्मर्ले श्रीपति ॥ [?]

**End.** श्रीधर्म्मदेवपादाब्जं स्वभूवंशाब्धिमम्भव
संसारतापशान्त्यर्थं बुद्धौ संधार्य्यऽनिशं ।
धर्म्मं सत्तानां श्रुतिसारगम्यं मुक्तं पथ्यं [?] पुरुषोत्तमाख्य
दद्नर्निजेभ्यः स्वदयावशान श्रीधर्म्मदासो जयति स देवः ।
वन्दे द्वादशदेशनिर्म्मितयथायोग्योर्द्ध्वपुण्ड्रस्थिति
याङ्कं विभ्रतमङ्कमध्यरिद्राङ्कूत प्रसन्नाननम् ।
वाम शुभ्रतर वसानमनिश संसारतापापह
वक्षःशोभिसरोरुहाक्षतुलसीदामाभिराम गुरु ॥

**Colophon.** इति श्रीस्वयम्भूदेवचरित्रे पञ्चदशमं विश्रामः ॥ सवत् १९४० ।

विषयः । हरिभक्तिमाहात्म्यकथन । तुलसीमाहात्म्यकथन । तुलसीधारणविध्यादिकथन ॥ स्वयम्भूकृतकृष्णस्तुतिकथन । कृष्णेन स्वयम्भुवो गुरूपदेशादिकथन ॥ प्राप्तवैष्णवधर्म्मज्ञानस्वभुवो दिग्विजयादिकथनं ॥

---

**No. 352.** **स्वरूपविवरणम्** By आनन्दज्ञान । Substance, country-made paper, 12 x 4 inches. Folia, 4 Lines, 16 on a page Extent, 240 slokas Character, Bengali. Date ? Place of deposit, Puri. Śankara Maṭha. Appearance, old. Prose. Generally correct.

**Beginning** ॐ विधूतविविधोपाधिव्याधिबोधैकमूर्त्तये ।
प्रीतये परमानन्दवपुषे ब्रह्मणे नमः ॥
स्वरूपाख्यं स्वरूपविषयं प्रकरणं प्रतिपित्सुर्भिरधिकारिभिः हेयोपादेय-
विवेकार्थमनर्थहेतुं पुरुषार्थहेतुञ्च प्रथमं दर्शयति । अनात्ममूर्त्त इति ।
इत्यादि ।

**End.** तदेवमनर्थतद्धेतुजिहासता पुरुषार्थतद्धेतुजिघृक्षतानेन भवतीति प्रकरण-
मिदं श्रोतव्यमिति भावः ।
हेयादेयाभिधावादो यस्मिन्नर्थो न गाहते ।
तं प्रत्यञ्चं परानन्दपुरुषोत्तममाश्रये ॥

**Colophon** इति श्रीपरमहंसपरिव्राजकाचार्य्यश्रीशुद्धानन्दपूज्यपादशिष्य श्रीभगवदा-
नन्दज्ञानविरचितं स्वरूपविवरणं समाप्तम् ॥

विषयः । अविद्याजनितसंसारस्य स्वरूपनिरूपकग्रन्थस्य व्याख्यानम् ।

---

No. 353. हंसदूतटीका By पुरुषोत्तममिश्र । Substance, palm-leaf, 12 × 2 inches. Folia, 121 Lines, 7 on a page Extent, 3872 slokās. Character, Uriā Date ? Place of deposit, District Purī, pargana Rāhan, grāma Jagannātha Vidyādharapura, Paṇḍita Rāmacandra Miśra. Appearance, old Prose. Generally correct

श्रीकृष्णाय नमः ।

**Beginning** कोऽपि पुरुषः मे मम हृदि मनसि स्फुरतु प्रकाशीभवतु इत्यन्वयः
कोपीत्यनिर्देशत्वेन विशिष्टाशक्यनिर्वचनता सूचिता किंविशिष्टः दुकूलं
बिभ्राणः दधत् दुकूलं किंविशिष्टं दलितं पिष्टं यद्धरितालं पीतवर्णवस्तु
गैरिकनिर्देशः तस्य या द्युतिः तां हरति अनुकरोति जयति तथोक्तं
हरितालं धातुभेदे कौद्रुर्म्यांव्योमरेखयोः इति मेदिनी ।
इत्यादि ।

**End** प्रकृष्टो मदो हर्षः प्रमदः, मदो रेतसि कस्तूर्य्यां गर्व्वे हर्षेभदानयोरिति
विश्वः ।
येषां दोषविदां विदूषणविधौ सर्गिकोऽज्ञानिनां
ये वाग्मीर्णपदार्णवैरतिकृते रञ्जीकृतं दूषणं ।

ऋग्मेधां स मते + + निजगुणव्याख्यामवैतत्कृतैः
यस्येषां गुणविद्यपि परां प्रीति ययौ नौमि तान् ॥ (?)
श्रौ श्रीनरसिंहभूपतिलकव्याख्याभिमख्ये मया
कालेनापि कृता यथायथमिति टीका मतां प्रीतय (?) ।
अस्यां यद्यदलंलि विभ्रमवशाद् वा सम्प्रमाद् वा भ्रमात्
शोध्य तत्तदसंशयमेव निपुणैर्याचे मतः साञ्जलिः ॥

**Colophon.** इति श्रीपुरुषोत्तममिश्रविरचिता हंसदूतटीका समाप्ता ।

विषयः । हंसदूतव्याख्या ।

---

**No. 354.** हनूमत्कवचं । Substance, country-made paper, 15 x 3 inches. Folia, 2. Lines, 5 on a page. Extent, 30 slokas. Character, Bengali. Date ? Place of deposit, Zilla Medinipura, Post Gadvetā, grama Khunvedā, Babu Vaikunṭhanātha Cakravarti. Appearance, fresh. Verse. Correct

**Beginning** ॐ हनूमते नमः । ब्रह्मोवाच
अस्य श्रीहनूमत्कवचस्य ब्रह्मऋषिरनुष्टुप्छन्दो हनूमान
परमात्मा देवता मारुतात्मज इति बीजं अञ्जनासूनुरिति शक्तिरात्मन सकलार्थसिद्धये विनियोगः ।
ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहं
देवेन्द्रप्रमुखं प्रशस्तयशसं देदीप्यमानं रुचा
सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं
संरक्तारुणलोचनं पवनजं पीताम्बरालङ्कृतं ॥
ॐ हनूमान् पूर्वतः पातु दक्षिणे पवनात्मजः ।
पातु प्रतीच्यामक्षघ्नः पातु सागरपारगः ॥ इत्यादि ।

**End.** यो वारां निधिमल्पपल्वलमिवोल्लङ्घ्य प्रतापान्वितो
वैदेहीघनशोकतापहरणो वैकुण्ठभक्तप्रियः ।
अक्षाद्यूर्जितराक्षसेश्वरमहादर्पापहारी रणे
सोऽयं वानरपुङ्गवोऽवतु सदा चास्मान् समीरात्मजः ॥

**Colophon.** इति ब्रह्माण्डपुराणे हनूमत्कवचं समाप्तम् ॥

विषयः । हनूमतःकवचकथनम्

**No. 355.** हस्तसञ्जीवनी By मेघविजयगणक। Substance, country-made paper. 11 x 5 inches. Folia, 24. Lines, 13 on a page. Character, Nagara. Date, Saṃvat 1874. Place of deposit, District Chāpra, P.O Gopalgañja, Harapura, Jagadeo Paṇḍita. Appearance, tolerable. Verse. Correct.

**Beginning** श्रीगणेशाय नमः ।

श्रीशङ्खेश्वरपार्श्वप्रणमन् ध्यायं स्तमेव जिनवृषभ ।

हस्तप्रशस्तलक्षणयालक्षं, लक्षतां, वक्ष्ये ॥

श्रीनाभेयः प्रभुर्जियात् सर्व्वतो जगदीश्वरः ।

यत स्वालक्षणिका विद्या निर्दिष्टा भुवनत्रये ॥ इत्यादि ।

**End.** अनुष्टुपभासपदाभ्यां जया पञ्चशती भ्रुव

ग्रन्थे सतां प्रमादाच श्रेयः श्रीरस्तु शाश्वती ।

**Colophon.** इति श्रीहस्तसञ्जीवनं सिद्धिज्ञाने महोपाध्याय-श्रीमेघविजयगणक विरचित सम्पूर्णम् । सम्वत् १८७४ ।

विषयः । हस्तलक्षणादिनिरूपणम् ।

---

**No. 356** ऋताग्न्युपहासस्तभाष्यम्। Substance, country-made paper, 11 x 4 inches. Folia, 8. Lines, 11 on a page. Extent, 240 ślokas. Character, Nagara. Date ? . Place of deposit, Benares City, Govinda Bhaṭṭa. Appearance, new. Prose. Incorrect.

**Beginning** सभोगाय प्रार्थितोभाव ...... राज्ञा स्वभार्यां रोमशां अप्रौढां सत्ता परिहसन् अनुष्टुभाह ॥

आगधिता परिगधिता या कशीकेव जङ्गहे । ददाति मह्यं या दुरो या शूनां भोज्याशता ॥

भोज्या भोगयोग्या एषा, आगधिता आसमन्तात्कृष्टीता लोहिता इत्यादि ।

**End.** किमर्थमहमेव प्रपद्ये इत्युच्यते अंसं वर्णतः पक्वबदरसम रोहित तथा बदरक दन्तरहितमपि बदरकं भक्षयितुं सौख्यञ्च तत्त्वविनां तेजोबल वीर्यविज्ञानधर्माणामपहन्तृ विनाशयित्व इत्येतत् तदेव लक्षणं श्रेतं इति ।

**Colophon.** श्रीमद्वापाशब्याय नमः ।

विषयः ; कृत्यान्युपवासस्तत्रयाख्या । असम्पूर्णोऽयम्" ।

---

**No. 357.** हैमलघुव्याकरणढुण्ढिका By उदयसौभाग्य । Substance, country-made paper, 12×4 inches. Folia, 128. Lines, 19 on a page. Extent, 9960 slokas. Character, Nāgara. Date ? Place of deposit, Benares City, Dimmaṇḍalācārya Mahārāja Vālacandra Sūri. Appearance, old. Prose. Correct.

**Beginning.** श्रीशारदां नमस्कृत्य + + + परस्तुति हेतवे

हेमव्याकरणस्येयं लिख्यते ढुण्ढिका यथा

अर्थौ प्रणम्येति ।

**End.** आकारान्तवर्जितेभ्यो विकल्प केचिदिच्छन्ति, तन्मते दुःशासः दुर्योधः ।

दुर्दर्शः दुर्धर्षः दुर्मर्षः इत्याद्यपि + + + भवति ।

**Colophon.** श्रीखरतरगच्छे श्रीजिनवर्द्धनसूरिपट्टे श्रीजिनचन्द्रसूरिपट्टोद्यालङ्कार

+ + + श्रीजिनसागरसूरिभिः उदयसौभाग्यगणिनामापरेण परोप-

कारार्थं शिष्यजनसुबोधार्थं च कृतायां श्रीहैमलघुव्याकरणढुण्ढिकायां

पञ्चमस्याध्यायस्य तृतीयः पादः समाप्तः ।

विषयः । जैनव्याकरणम् ।

---

**No. 358** होमपद्धतिः By लम्बोदर । Substance, country made paper, 9×5 inches. Folia, 21. Lines, 12 on a page. Extent, 1000 slokas. Character, Nāgara. Date ? Place of deposit, Puri, Śankara Maṭha. Appearance, bad. Prose and verse. Generally correct.

**Beginning.** श्रीगणेशाय नमः ।

अथ होमपद्धतिः ।

सुस्नातः प्राङ्मुखो भूत्वा यजमानः कृताह्निकः ।

आहूय ब्राह्मणान् कुर्यात् प्रतिष्ठां विधिवत् तथा ॥

ईशान्यां मण्डपं कृत्वा घटानां स्थापनं ततः ।

वर्द्धनं स्वस्तिपुण्याहवाचनं कङ्कणं तथा ॥

स्नानं स्थापनं कृत्वा समाप्य कुण्डकण्डिकां ।
वेदमन्त्रैः प्रतिष्ठाप्य कुम्भस्थावाहयेत् सुराम् ॥
पुष्पमाल्यादिभिः सर्व्वान् पूजयेत् भक्तिसंयुतः ।
गुडौदनादिनैवेद्यं सर्व्वेभ्योऽपि निवेदयेत् ॥ इत्यादि ।

**End** कृतस्यैतस्य × × × नातिरिक्तं यत् कृत तत् सुकृतमस्तु यन्नकृत तद् विष्णोः प्रसादाद् ब्राह्मणवचनात् सर्व्वं × × परिपूर्णमस्तु । ततो ब्राह्मणैः कुटुम्बजनैः परिवृतो भोजनं कुर्य्यात् ।
दिवि भुव्यन्तरीक्षेषु उत्पातेषु जातेषु उद्वेगात् भूतादिषु च शान्त्यर्थं कर्त्तव्य ।
अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।
सर्व्वान् कामानवाप्नोति स्वर्गलोके महीयते ॥

**Colophon.** इति श्रीलम्बोदरविरचिता होमपद्धतिः समाप्ताः ॥

विषयः । ग्रहाणां होमविधानकथनम् ।

---

**No. 359.** होरासुधानिधिः । By Nārāyana Substance, country-made paper, 12 × 4 inches. Folia, 93. Lines, 11 on a page Extent, 2790 ślokas Character, Nāgara. Date ? Place of deposit, Benares City, late Babu Hariścandra. Appearance, old Verse Correct.

**Beginning.** श्रीगणेशाय नमः ।
श्रीशाद्यैः सहित गजेन्द्रवदन श्रीशारदा + + + कृत
पात्र मोदकपूर्णमाद्यकलशं मालाक्षसूत्र भुजै.
बिभ्राणं शुचिनागमस्थवलमृत्काय सत्कार्कभ
वन्दे मूषकवाहणं गणपतिं त्रैलोक्यचिन्तामणिम् ।

**End.** यदशरदगचन्द्र. मकेन्द्रस्य शुभैर्युतः,
शय्यादानात्मक कर्म दोलालीलाप्रदायक ।

**Colophon.** इति सामुद्रिकोपनामकमाधवात्मजनारायणविरचिते होराशास्त्रसुधानिधौ राजयोगाध्यायः ।

विषयः । होराणां विवरणम् ।

---